THE

PRINCESS OF WALES

SARSVATI BHAVANA TEXTS

No. 32



THE

# TATTVASĀRA.



*GOVERNMENT SANSKRIT LIBRARY,*

*BENARES.*



1930

Price Re. 1.]

Saleable at half of the printed price.

THE

# PRINCESS OF WALES
## SARASVATI BHAVANA TEXTS

No. 32

EDITED BY

GOPINATH KAVIRAJ

# THE
# TATTVA SARA

Printed by Venkatesh Shastri Dravid, B.A.,

Sanga Veda Vidyalaya Press,

Ramghat, Benares City.

1930

Saleable at half of the printed price.

महामहोपाध्याय राखालदास न्यायरत्नकृतः

# तत्त्वसारः

THE

# TATTVASĀRA

OF

MAHAMAHOPADHYAYA RAKHALADASA NYAYARATNA.



Edited with Introduction etc

BY

HARIHARA SASTRI

*Professor, Benares Hindu University, Benares.*



Published under the authority of the Government of the United Provinces by the Government Press, Allahabad. Government Sanskrit Library Benares.

*1930*



# भूमिका

अथैषा प्रस्तूयते द्वितीयावृत्तिस्तत्त्वसारस्य मुद्रयित्वा प्रकाशयितुम्। एष खलु कलकात्ता-प्रेसिडेन्सीकलेजाध्यापकेन श्रीमता हरिश्चन्द्रकविरत्नेन कलकात्तामहानगर्य्यां गिरिश-विद्यारत्नयन्त्रे १८८७ तमे खृष्टवर्षे वङ्गाक्षरैः प्रथमं मुद्रितः प्रकाशितश्च। प्रथममुद्रितग्रन्थावसाने तर्करसिकानां बहोः कालात् प्रभृति तदसौलभ्यवैमनस्यमासीदिति सारतरसन्दर्भप्रचारप्रवणचेतसा श्रद्धास्पदमित्रवरेण काशिकराजकीयसंस्कृतपाठशालाध्यक्षेण पण्डितप्रकाण्डेन श्रीमता गोपीनाथकविराज एम० ए० महोदयेन तत्सम्पाद्यमानायां 'सरस्वतीभवनग्रन्थमाला'यां "तत्त्वसार"स्य प्रकाशने प्रोत्साहितोऽहम्। अस्य च खण्डनार्थं जयपुरराजकीयतात्कालिकशिक्षाविभागाध्यक्षेण (Director of Public Instruction, Jaypur State) श्रीहरिदास-शास्त्रि-एम० ए० महोदयेन "तत्त्वसारविचारो" नाम कश्चन ग्रन्थः प्रणीतो मुद्रापितश्च १८९१ तमे खृष्टाब्दे। तत्र च प्रायः सर्वत्र गालिवर्षणममर्षणमेवानुष्ठितं कस्यापि महामहोपाध्यायस्य प्रणोदनैर्ग्रन्थकर्त्तृतिनामलोलुपेन तेनैव शास्त्रिवर्येण। यत्र तु विचारस्यावर्त्तत वार्त्तापि, तस्य सोत्तरः समुल्लेखः कृतो यथामति निबन्धेऽस्मिन् टिप्पण्याकारेण।

अस्य खलु "तत्त्वसार"स्य रचयिता दिगन्तविश्रान्तकीर्त्तिः साक्षादक्षपादमूर्त्तिः परमपूज्यपादः श्रीमान् महामहोपाध्यायो राखालदासन्यायरत्नः।

वङ्गेषु गङ्गातीरवर्त्तिनि 'भट्टपल्ली'ति प्रसिद्धे ग्रामे १७५१ तमे शाकवर्षे भाद्रे मासि अनन्तचतुर्द्दश्यां पाश्चात्त्यवैदिकश्रेण्यां यजुर्वेदिवाशिष्ठगोत्रे समुत्पन्नोऽसौ राखालदासः। तातस्तस्य सीतानाथविद्याभूषणो धर्मशास्त्राध्यापक आसीत्, माता च विमला देवी। आसन् खलु राखालदासस्य त्रयो भ्रातरः कनिष्ठाः शास्त्रैकनिष्ठाः। तेषामन्यतमः

प्रतिभावतारस्ताराचरणतर्करत्नो ज्यायसो न्यायरत्नमहाशयादेव नव्य-प्राचीनसमग्रन्यायशास्त्रमधीत्य लब्धाऽनितरसाधारणव्युत्पत्तिविशेषः काशिराजसभास्तारपदमलङ्कुर्वाणो गीर्वाणवाणीलीलानिकेतनायमानः काशिकविद्वन्मण्डलीषु प्रधानतया विराजते स्म।※

व्याकरणं साहित्याऽलङ्कारांश्चासौ राखालदासो भट्टपल्लीनिवासादेव जयरामन्यायभूषणादध्यैष्ट। चतुर्द्दशवयोवर्षे अभिजातकुलललामया सुप्रभादेव्या साक्षाद्गौर्य्येवाऽष्टमवर्षीयया संवृत्तस्तस्य परिणयः।

स खलु—

ऊनविंशवयसि स्थितस्तत
स्तर्कशास्त्रमधिगन्तुमिच्छया।
आजगाम सुधियां सुधानिधिं
सार्वभौमयदुरामनामकम्॥

सद्य एव स च बुद्धिवैभवैः कल्पनासु कुशलैरनल्पकैः।
शिक्षकस्य सहपाठिनां तथा मानसेषु सृजति स्म विस्मयम्॥

असौ परमगुरोर्गुरोरवतारादिव हलधरतर्कचूड़ामणिमहाशयादधिजगाम निगूढं रहस्यं तर्कशास्त्राणाम्। 'कणादसूत्रविवृति'कारत्वे प्रसिद्धात् जयनारायणतर्कपञ्चाननादपि 'आत्मतत्त्वविवेकं' 'शब्दशक्ति-प्रकाशिका' ञ्चासीदधीतवानेष यशोमात्रावशेषे यदुरामसार्वभौमे।

'न्यायरत्न'मुपनाम सार्थकं धारयन् स गुरुभिः समर्पितम्।
नूनमारभत शास्त्रपाठनां त्रिंशवर्षपरिपूरणात् पुरः॥

---

※ अस्यैव कनीयान् तनयो महामहोपाध्यायः श्रीमान् प्रमथनाथतर्कभूषणमहाशयः साम्प्रतं काशीहिन्दूविश्वविद्यालये प्राच्यविद्याविभागाध्यक्षपदमलङ्कुर्वन् वर्वर्त्ति।

साक्षाद्बौद्धावतारः परगुणोल्लसितो विश्वविश्रुतकीर्त्तिः श्रीमदीश्वरचन्द्रविद्यासागरो नवीनाध्यापकस्याऽस्य विद्यालयसुपरिपोषणार्थं मुद्रादशकमितां मासिकीं वृत्तिं स्वत एव प्रदत्तवानासीत्। परन्तु न्यायरत्नमहाशयः—

ततश्चतुस्त्रिंशवयःक्रमोदये स्वयं तदर्थग्रहणान्न्यवर्त्तत ।
बभूव विद्यार्जितवित्तसञ्चयैः समर्थता तस्य हि शिष्यपोषणे ॥

विचारे पाण्डित्यं परिषदि बुधानां प्रकटयन्
धनं राजन्याद्यैः समुपहृतमत्यादरभरैः ।
गृहीत्वा सौहित्यं मनसि लभमानः स च चिरं
स्वतन्त्रः स्वीचक्रे न खलु भृतकाऽध्यापकपदम् ॥

१८८७ तमे खृष्टवर्षे भारतेश्वर्य्या भिक्टोरियाया 'जुबिली' महोत्सवावसरे न्यायरत्नमहाशयप्रमुखा अष्टावेव भारतीया विद्वांसः सर्वप्रथमं 'महामहोपाध्याय' इति गरीयसोपाधिना बभूवुर्विभूषिताः।

पञ्चाशद्वर्षाधिकमसौ भोजनादिप्रबन्धपुरसरं बहून् विद्यार्थिनोऽध्यापयामास। तेषु स्वर्गतो महामहोपाध्यायो नैयायिककुलपतित्वेन परिचितः शिवचन्द्रसार्व्वभौमः प्रधानतम इति सुविदितमेव सर्वेषां शास्त्ररसिकानाम्। अस्यैव सार्वभौममहाशयस्य च्छात्रेषु साम्प्रतं महामहोपाध्याय–श्रीमत्प्रमथनाथतर्कभूषण–शास्त्रकानन-पञ्चानन–श्रीमत्पञ्चाननतर्करत्न-महामहोपाध्याय–श्रीमद्गुरुचरणतर्कदर्शनतीर्थ–महामहोपाध्यायश्रीमत्पार्वतीचरणतर्कतीर्थप्रमुखा पण्डितमण्डलीशिरोमण्डनानीव विराजन्ते।

भ्रात्रादि स्वजनेषु शास्त्ररसविन्मित्रेषु च प्रायशः
स्वर्गं प्रस्थितवत्सु वत्सलतया शोकेन खिन्नान्तरः ।

आशामाशु पुपोष चेतसि सुधी राखालदासस्त्वसौ
वासाय स्मरसूदनस्य नगरे श्रीकृत्तिवासःप्रियः ॥

इषुसोमवसुक्षपाकर (१८१५) प्रमिताब्दे शकभूपतेरसौ ।
सफलामकरोच्चिरन्तनीमधिवाराणसि वासवासनाम् ॥

काश्यां यथा प्रतिग्रहमन्तरेण पण्डितप्रकाण्डस्यास्य जीविकानिर्वाहः स्यात्, तथा पूर्वमेव व्यवस्थापितं विद्यानुरागिणा 'हाथुया'-नरेशेन कृष्णप्रतापसाहिबाहादूरेणेति निरुद्वेगमत्रापि पाठनामात्रव्रतोऽयं शास्त्रालोचनेनैव समयमतिपातयति स्म ।

काश्यामपि विद्वद्भूयिष्ठायां न्यायरत्नमहाशयस्य महती प्रतिष्ठा समवर्त्तत । वाराणसेयकोविदकुलशिरोभूषणायितः सकलशास्त्रपारङ्गमः शिवकुमारशास्त्री न्यायरत्नमहाशयं चिरं गुरुमिव मन्यते स्म ।

कृष्णायेव युधिष्ठिरो नरपतिस्तद्राजसूयक्रतौ
भक्तिप्रेममहार्घमर्घ्यमनघं शम्भुप्रतिष्ठोत्सवे ।
प्रायच्छद् विरुदावलीविलसितः काशीनरेशः स्वयं
तस्मै सादरमानमय्य मुकुटं मध्ये च विद्यावताम् ॥

अथ—

खपक्षवसुशीतगु ( १८२० ) प्रमितशाकसम्वत्सरे
तदीयसहधर्म्मिणी स्वपुरभट्टपल्लीं गता ।
ज्वरेण सहसाऽऽक्रमादमरनिम्नगायास्तटे
सुतादिपरिवेष्टिता सपदि दिव्यधामाऽगमत् ॥

गिरीशनगरीस्थितिव्रतविघातशङ्कायुतो
न तत्र गतवानसौ चिरकलत्रविच्छेदने ।

विषोढुमपि शक्यते हृदयमर्मभेदन्यथा
तथापि न मनस्विभिर्नियमतो मनाग् भ्रश्यते ॥

जायया बहुभिः पुत्रकन्यादिभिश्च विरहितोऽपि न्यायरत्नमहाशयः स्वानुरूपेणैकमात्रेण तनयेन सार्द्धं काश्यामध्यापनाभगवदाराधनादिना कियता च सुखेनैव दिवसान् यापयति स्म। परन्तु दैवहतकस्य तदप्य-सह्यमिवाऽभवत्। अहो, तेन तत्रभवतो न्यायरत्नमहाशयस्य शिरसि सद्य एव भीषणः शोकाशनिर्निपातितः। १८२८ तमे शाकाब्दे सौर-वैशाखस्य पञ्चमे दिवसे अमानुषमनीषासमुज्ज्वलो निपुणतमकविः सुपण्डितः साक्षात् कुमार इव 'हरकुमारशास्त्री'ति प्रसिद्धस्तदीय-स्तनयो वाराणस्यां सुरतरङ्गिणीतीरे द्वात्रिंशद्वर्षवयस्येव प्राणान-मुञ्चत्। परन्तु—

सदा निदधदन्तरे सुतवियोगशोकक्षतं
मनागपि महामना विकलतां स नैवाऽतनोत्।
प्रवृद्धवड़वानलं सततमब्धिरन्तस्तले
वहन्नपि सुशीतलो वितनुते च नोद्वेलताम् ॥
यथाविधि च पाठनास्वभवदेव लिप्तः पुन
र्निबन्धरचनासु च प्रणिदधौ प्रसन्नं मनः।
सुपर्वसु च पूर्वतोऽप्यधिकमेव चेतो ददा
वमानुषमनीषिणश्चरितमेवमत्यद्भुतम् ॥
'कुमारहर'नामकं स शिवलिङ्गमस्थापयत्
समस्तधनसम्पदामपि चकार तत्राऽर्पणम्।
यथा चिरमपि क्रिया भवति नित्यनैमित्तिकी
प्रबन्धमकरोत्तथा स्थिरतरेण वित्तेन सः ॥

अमुना पण्डितप्रकाण्डेन अधोलिखिता ग्रन्थाः प्रणीताः, तेषु❀ चिह्नाङ्किता मुद्रिताः, प्रकाशिताश्च ।—

(१) जीवतत्त्वनिरूपणम्
(२) तत्त्वसारः ❀
(३) रसरत्नम् ❀
(४) कवितावली ❀
(५) अद्वैतवादखण्डनम् ❀
(६) मायावादनिरासः ❀
(७) विधवोद्वाहखण्डनम् ❀
(८) विविधविचारः ❀
(९) अद्वैतवादखण्डनपरिशिष्टम् ❀
(१०) दीधितिकृन्न्यूनतावादः ❀
(११) जगदीशन्यूनतावादः
(१२) गदाधरन्यूनतावादः ❀
(१३) शक्तिवादरहस्यप्रकाशः ❀
(१४) पञ्चलक्षणीक्रोड़पत्रम्
(१५) व्यधिकरणधर्म्मावच्छिन्नाभावक्रोड़पत्रम्
(१६) सिद्धान्तलक्षणक्रोड़पत्रम्
(१७) अवच्छेदकत्वनिरुक्तिक्रोड़पत्रम्
(१८) शब्दशक्तिप्रकाशिकाक्रोड़पत्रम्
(१९) आत्मतत्त्वविवेकटिप्पणी
(२०) ज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकताखण्डनम्

चिरमेवमेव समयं नयन्नसौ

पड़शीतिवर्षवयसि स्थितः क्रमात् ।

सहसा ज्वरेण परिपीड़ितो जहौ

चिरवाञ्छितञ्च निजपाठनाव्रतम् ॥

❀ ❀ ❀ ❀ ❀

अथ गाङ्गतीरमनुगन्तुमिच्छया

स बभूव नूनमतिवेलविह्वलः ।

इति तावदादिमणिकर्णिकातटं

नयति स्म शिष्यनिकरस्तमञ्जसा ॥

रसशैवनेत्रवसुचन्द्र ( १८३६ ) पूरणे

शकहायने च निशि सोमवासरे ।

बत कार्त्तिकाऽसितचतुर्दशीतिथौ

स जगाम धाम परमं तनुं त्यजन् ॥❀

काशीहिन्दूविश्वविद्यालयः ।
८ मई, १९३० ।

श्रीहरिहरशास्त्री

❀ परमपूज्यपादानां गुरुवराणां सम्पूर्णजीवनवृत्तान्तो 'न्यायरत्नचरितम्' इत्याख्ये खण्डकाव्ये मया विशदं वर्णितः । तच्च काव्यं 'काशीसरस्वतीभवनतः' प्रकाश्यमाने 'सारस्वतालोक' इत्यभिधाने राजकीये महानिबन्धेऽचिरमेव प्रकाश्यते । अत्रत्याः श्लोकास्तत एव संमुद्धृताः ।



# विषयसूची

❁ श्रीः ❁

# तत्त्वसारः

मातर्ममातितमसा[1] वृतमाद्यविद्ये
चेतोऽतिकुत्सितचिता[2]ऽञ्चितमीशहृद्ये ।
नान्ये स्पृशन्तु घृणयन्तु सुराः शरण्ये
नोपेक्ष्यमत्र नटनं तव दक्षकन्ये[3] ॥१॥

[4]सीतानाथ पितः प्रबन्धनविधिव्याघातविध्वंसनं
मात्रा साधय सीतया विमलया[5] शीतांशुसोदर्य्यया[6] ।
नीलाम्भोरुहनिन्दिनीलमणिभाःक्षोभाकरं शोभया
संगृह्य स्वगुणेन विग्रहमनुग्राह्यस्य चित्ते वसन् ॥२॥

काव्यव्याकरणाब्धिपारकरणे यः कर्णधारायते
तस्मात् श्रीजयरामपादकमलात् क्षोदाक्षलाभे कृते ।
लब्धोऽभूद् यदुरामपादगमणिर्यः सर्व्वविद्याखनिः
क्षोदोऽशिक्षत भास्करात् हलधरात् यस्तर्कचूडामणिः ॥३॥

भो भो विज्ञतमा ममाद्य विनयैरज्ञस्य विज्ञापनं
स्वेच्छाचारमवेक्ष्य कल्पनविधौ निन्दा विधेया न मे ।
यस्मात्सर्वनिबन्धकृद्गुरुकृतग्रन्थस्य संसेवया
शिक्षा तस्य जिगीषया सह फलं यत्नेन लब्धं मया ॥४॥

---

(१) 'अतितमसा' प्रचुरतमोगुणेन, पक्षे प्रगाढान्धकारेण ।

(२) 'अतिकुत्सितचिता' अपकृष्टज्ञानेन, पक्षे चाण्डालादिशवदाहयोग्यस्थानरूप-चितया । 'अञ्चितं' युक्तम् ।

(३) 'दक्षस्य' ब्रह्म-मानसपुत्रस्य कन्ये, अन्यत्र निपुणतरकन्ये ।

(४) 'सीतानाथ पितः' श्रीरामचन्द्र जगत्पितः, पक्षे सीतानाथनाम्ना प्रसिद्ध मदीयजनक ।

(५) 'विमलया' मालिन्यशून्यया, पक्षे विमलनाम्न्या मदीयमात्रा ।

(६) 'शीतांशुसोदर्य्यया' लक्ष्मीस्वरूपया, पक्षे चन्द्रसदृशसौन्दर्य्यसम्पन्नया ।

यद्वाक्यं श्रुतिषु श्रुतं स्मृतिगतं यद्व भारतान्तःस्थितं
तत्तद्वाक्यविरोधि किञ्चन वचो नोक्तं न चासङ्गतम् ।
को दोषस्त्ववहेलनेन कियताऽनाप्तेन सिद्धान्तिते
भो भो भ्रातरतोऽत्र नास्तु भवतोऽनास्था व्यवस्थापिते ॥५॥
विमुक्तचिन्तामणिदीधितिस्वादन्तस्तमो यस्य न यातमन्तम् ।
ध्रुवं भवेदेव नवप्रबन्धप्रभावतस्तस्य न तेन बन्धः ॥६॥
शैत्यमाधुर्य्यवैधुर्य्यदोषश्चेदवधार्य्यते ।
विनाऽवगाहपानाभ्यां तरङ्गिण्यास्तु तेन किम् ॥७॥
सत्काव्येऽप्यतिकोमले सति महाकाठिन्यदोषाङ्किते
किं स्याद्युष्मदनादरः सहृदया यत्नैर्मया योजिते ।
सर्वस्याऽहृदयङ्गमेऽपि हृदये लिप्ते नृपश्चन्दनै-
र्हारं मारकतं शिलामयमपि प्रीत्या न किं धारयेत् ॥८॥
सुबुधमुदभिलाषाद्भट्टपल्लीस्थवासः
स्थिरगिरिशपदाशः श्रीलराखालदासः ।
रचयति नवयुक्त्या न्यायरत्नः सयत्नं
सदयहृदयरम्यं तत्त्वसारात्मरत्नम् ॥ ९ ॥

अथारभ्यते—जीवः सर्वमूर्त्तसंयोगी परममहान् एकदाऽवस्थिततया-वच्छरीरभेदेन भिन्नः स एव च स्वर्गनरकादिभोक्ता । मनस्त्वणुतरं पदार्थान्तरं शरीरभेदेन भिन्नं ज्ञानादेः करणञ्च न तु महत्त्वपरिमाणाश्रयश्चैतन्याद्याश्रयश्च । एतदेवोक्तं प्राचीनैः—"अयौगपद्याज् ज्ञानानां तस्याणुत्वमिहेष्यते ।" अपि च "मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेदिति॥"

इति प्राचीननैयायिकसम्प्रदायसम्मतजीवनिष्कर्षः ।

अथ नव्यनैयायिकमतम् ।

मनसामेव चैतन्यं तत्रैवेच्छादिका गुणाः ।
अहम्मतीतिस्तत्रैव न तु जीवान्तरस्थितिः ॥१०॥

अयमाशयः—ज्ञानेच्छाद्वेषादृष्टकृतिभावना मनसामेव गुणाः। एतद्गुणगणधर्मितया मनसामेव साधनीयत्वात्। न पुनस्तद्धर्मितया जीवान्तर सिद्धिरपि गौरवान्मानाभावाच्च। अत एव "भव हृदय साभिलाषं सम्प्रति सन्देहनिर्णयो जातः। आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्॥" इति[7] भगवत्कालिदासकाव्यमपि साधु सङ्गच्छते। अन्यथाऽभिलाषवत्त्वस्य आशङ्कारूपज्ञानवत्त्वस्य च मनसि बाधेन तदीयकाव्यवाक्यस्य बाधितार्थकत्वं प्रसज्येत। अत एव भारतपुराणमहाकाव्यादिष्वपि मनसामेव ज्ञानहर्षादिमत्त्वं बोधयन्ति बहुतरवाक्यानीति दृश्यते। तेष्वेव तादृशगुणवत्त्वं श्रुतिरपि प्रमापयति। श्रुतिर्यथा—"कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिर्ह्रीर्[8] धीर्भीरित्येतत् सर्वं मनस्एवेति।"

न च मनसा वेद्मीत्यादिव्यवहारस्यापि सर्वसिद्धतया तद्बलात् मनसि ज्ञानकरणत्वस्यैव प्रतिपत्तेः कर्तृत्वकरणत्वयोस्तु परस्परविरोधेन तदाश्रयकर्त्रन्तरस्वीकारावश्यकत्वं स एव त्वतिरिक्तोजीवः प्रकारान्तरेण तदनिर्वाहादिति वाच्यम्,—"आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मने"त्यादिकालिदासाद्युक्तिदर्शनेन तयोर्विरोधे मानाभावात्। तद्दर्शनेन च प्रसिद्धनिबन्धकारैर्जगदीशतर्कालङ्कारैरपि "शब्दशक्तिप्रकाशिकायां" तयोरेकत्र सत्त्वं स्वीकृतम्। अतो नापसिद्धान्तभीतिरपि। एवम् अहं शरीरी त्वञ्च सुखीत्यादिप्रतीतिविषयो मन एव। जन्मान्तरीणशरीरपरिग्रहः स्वर्गनरकादिभोगकैवल्यादिकञ्च मनसामेव। न च "वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही"त्यादि श्रीभगवद्वचनस्थक्त्वाप्रत्ययश्रवणेन गृहीतशरीरपरित्यागानन्तरमेव शरीरान्तरपरिग्रहः प्रतिपाद्यते,स च जीवानां विश्वव्यापित्वं विना न हि सम्भवति स्वकर्मवशेनाऽतिदूरवर्त्तिस्वर्गनरकस्थानदेशान्तरेषु त्वरितगतिशीलानामपि मनसां शरीरान्तर-

(७) अभिज्ञानशाकुन्तले प्रथमेऽङ्के।

(८) बृहदारण्यकोपनिषद्, १।५।३

परिग्रहे कालविलम्बापत्तेरिति वाच्यम्, एकशरीरपरित्यागानन्तरमेव शरीरान्तरपरिग्रह इति नियमे मानाभावात्। अन्यथा "ऋतञ्च सत्यञ्चे"-त्यादिश्रुत्या मन्वादिना च प्रलयस्य प्रलयोत्तरं शरीरपरिग्रहस्य च प्रतिपादनं विरुध्येत। प्रलये जन्यद्रव्यमात्रस्याऽसत्त्वेन तदुत्तरंकाले शरीरपरिग्रहे पूर्व्वशरीरानन्तर्य्यव्याघातस्य सर्वैरेव स्वीकृतत्वात्। परन्तु "न स्नानमाचरेद्भुक्त्वा" "प्रातःसन्ध्यां ततः कृत्वा सङ्कल्पं बुध आचरेद्"। इत्यादौ क्त्वाप्रत्ययोऽप्युत्तरकालार्थको न त्ववहितोत्तरार्थक इति। "वासांसि जीर्णानी"त्यादिवचनेनापि मनसामेव जीवत्वं प्रतिपादितं न तु विश्वव्यापिनाम्। तथा सति शरीराणां तादृशजीवाच्छादकत्वविरहेण वसने तद्दृष्टान्तताऽनुपपत्तेः।

अथ मनसामणुतरत्वेन तदाश्रितसुखादीनामप्रत्यक्षत्वापत्तिः षड्विधप्रत्यक्ष एवाश्रयमहत्त्वस्य हेतुत्वात्। अन्यथा परमाणुद्व्यणुकतदाश्रितगुणादीनामपि प्रत्यक्षं वारयितुं न हि शक्येत। इति चेन्न,—

महत्त्वाऽनाश्रयस्पर्शवदन्यपरिमाणतः।
प्रत्यक्षं जायते सर्वं महत्त्वादेव तन्न तु ॥ २ ॥

अयमाशयः—प्रत्यक्षसामान्यं प्रति महत्त्वानाश्रया ये स्पर्शवन्तोऽवच्छेदकतासम्बन्धेन तद्भेदवत्परिमाणत्वेनैव हेतुत्वं स्वीक्रियते, न तु महत्त्वत्वेन। तथा च मनसामणुत्वेऽपि स्पर्शवत्त्वविरहेण उक्तपरिमाणरूपकारणसत्त्वात् तदीयसुखादिप्रत्यक्षं निराबाधमेव। परमाणूनां द्व्यणुकानाञ्च स्पर्शवत्त्वेन महत्त्वानाश्रयत्वेन च उक्तकारणविरहात् तेषां तदाश्रितगुणानाञ्च न प्रत्यक्षम्।

व्यासज्यवृत्तिधर्म्मावच्छेदेनैको गच्छति न द्वावित्यादिवत् परमाण्वादावपि स्पर्शसत्त्वेऽपि निरुक्तस्पर्शवदन्यत्वस्यापि सम्भवात् तादृशभेदत्वेन कारणत्वमपहाय गुरुणापि तादृशभेदवत्परिमाणत्वेन कारणत्वमभिहितम्। न चावच्छेदकतासम्बन्धेन तादृशभेदवत्परिमाणत्वेनैव

तादृशभेदवदेकत्वत्वजातिमत्त्वेनापि हेतुत्वस्य वक्तुं शक्यतया विनिगमनाविरहप्रसङ्गो दुर्वार इति वाच्यम्, यतो महत्त्वरूपनिखिलपरिमाणेषु अन्यथासिद्धिशून्यत्वं महत्त्वत्वेन प्रत्यक्षहेतुतावादिभिरपि स्वीकृतम्, अतस्तेषु तत् क्लृप्तमेव परन्त्वस्मन्मते मनःपरिमाणेष्वेव कतिपयेषु तत् कल्प्यम्। तादृशैकत्वत्वेन कारणताकल्पने तु सर्व्वेष्वेव तादृशैकत्वेषु तत्तदन्यथासिद्धिशून्यत्वं कल्पनीयम्, एवञ्चापेक्षाकृतक्लृप्तपदार्थघटितकारणत्वकल्पनसम्भवे कल्पनावाहुल्यभिया न तादृशैकत्वत्वेन कारणत्वकल्पनं सम्भवदुक्तिकम्। एकं द्रव्यमितिवत् एको गुण एका क्रिया एका जातिरभावोऽयमेक इत्यादिप्रतीतेरपि स्वारसिकतया गुणादिष्वपि संख्यावत्त्वं निरावाधमेव। एवञ्च द्रव्यमात्रावस्थायिपरिमाणापेक्षया एकत्वानामसंख्यतेति तन्निवन्धनधर्म्मिगौरवेण तादृशैकत्वेषु प्रत्यक्षकारणता कल्पनाया असम्भवाच्च।

न च गुणमात्रस्यैव द्रव्यमात्रावस्थायित्वनियमात् गुणात्मिकायाः संख्याया सम्भवो न हि गुणादौ तत्र तत्र एकत्वद्वित्वादिकन्तु तत्तद्व्यक्तित्वधीविशेषविषयत्वरूपमेवाऽगत्याङ्गीकार्य्यमिति वाच्यम्, तथा सत्येकोऽयं गुण एकमिदं द्रव्यमित्यादिप्रतीत्योरेकत्वाद्यंशे कियतोऽपि वैषम्यास्याऽननुभवेन संख्याया गुणात्मकत्वे प्रमाणस्यैव दुर्ल्लभत्वापत्तेः। न च गुणान्तर्गतत्वेन भगवत्कणादाद्युक्तिरेव तत् प्रमाणमास्तां महर्षिवचनस्याप्रमाणत्वे वैधावैधव्यवस्थितिविलयप्रसङ्ग इति वाच्यम्, विधिनिषेधवोधकालौकिकमहर्षिवाक्यानामेव वलवत्तोपगमात्, तादृशवाक्यानामेव योगर्द्धिसम्पादितत्वात्, न तु तदीयलौकिकवाक्यानामपि तथा, सति कपिलकणादादीनां परस्परं विरुद्धोक्तिर्न खलु सम्भवेत्।

अथ तुल्यपरिमाणकतन्त्वादिद्वयाधारव्धपटादिपरिमाणतस्तत्त्रयाद्यारव्धपटादीनां विलक्षणपरिमाणोत्पादनार्थं तादृशविलक्षणपरिमाणं प्रति तन्त्वादिनिष्ठत्रित्वादेः त्रसरेणुपरिमाणं प्रति द्व्यणुकनिष्ठत्रित्वस्य द्व्यणुकपरिमाणं प्रति च परमाणुनिष्ठद्वित्वस्य हेतुत्वमावश्यकम्। एवञ्चापेक्षा-

बुद्धिविषयत्वरूपद्वित्वादेस्तद्धे तुत्वेऽवच्छेदकगौरवम्। अतः सुखदुःखहेतुतया धर्म्माधर्म्मसिद्धिवत् स्मृतिहेतुतया संस्कारसिद्धिवच्च तादृशतादृशहेतुतया द्वित्वत्रित्वादिनामकसंख्यारूपगुणान्तरसिद्धिरप्यावश्यकी। न च द्वित्वादिकं गुणस्वरूपं क्रियारूपं वेत्यत्र विनिगमनाविरह इति वाच्यम्, द्वित्वादिकं न क्रिया परन्तु गुण एव द्विष्ठत्वे सति जन्यनिरवयवत्वात्, संयोगादिवदित्यनुमानेन, तस्य गुणत्वसिद्धेः। न चैतावता परिमाणकारणतया द्रव्यनिष्ठद्वित्वादेर्गुणत्वसिद्धावपि गुणादेरिव द्रव्यस्यापि तत्तद्व्यक्तित्वरूपमेवैकत्वमास्तां किमस्य गुणरूपपदार्थान्तरतास्वीकारेणेति वाच्यम्, अयमेकोऽयमेक इत्याद्यपेक्षाबुद्धिनिष्ठाया द्वित्वादिकारणताया अवच्छेदकघटकतया द्वित्वाद्यसमवायिकारणतया च लाघवेन तस्यापि गुणत्वसिद्धेः। न चैकत्वे कथं न क्रियात्वमिति वाच्यम्, अचञ्चले गगनादौ निष्क्रियत्वव्यवहारस्य सर्वसम्मततया तत्र क्रियात्वाभावसिद्धेर्निष्प्रत्यूहत्वात्। न च गगनादौ अन्त्यावयविषु च परिमाणजनकतया द्वित्वादिरूपगुणस्यैवासिद्धत्वात्तदसमवायिकारणतया कथं तत्रैकत्वसिद्धिः। घटोऽयमेकः घटौ द्वावित्यादिप्रतीतिस्तु गुणोऽयमेकः गुणौ द्वावित्यादिप्रतीतिवदुपपादयितुं शक्यते इति वाच्यम्, अपेक्षाबुद्धीनामनुगतरूपेण कारणतया तादृशकारणबलेन घटगगनादावपि द्वित्वाद्युत्पत्तेरावश्यकत्वात्। अनुगमप्रकारस्तु एकत्वप्रकारताविशिष्टज्ञानत्वमेव द्वित्वोत्पादकापेक्षाबुद्धीनामनुगमकम्। ज्ञाने प्रकारतावैशिष्ट्यं स्वनिरूपकत्वं स्वनिरूपितविशेष्यतावच्छेदकीभूतोभयावृत्तिधर्मेतरोभयावृत्तिधर्मावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारतानिरूपकत्वञ्च, यच्च स्वविशिष्टैकत्वप्रकारताशून्यत्वमेतत्त्रितयसम्बन्धेन बोध्यम्। त्रित्वाद्युत्पादकाले नियमतो द्वित्वाद्युत्पादवारणाय उक्तत्रितयसम्बन्धघटकचरमदलम्। उक्तशून्यत्वप्रतियोगिप्रकारतायां स्ववैशिष्ट्यं स्वनिरूपकज्ञानीयस्वनिरूपितविशेष्यतावच्छेदकेतरोभयावृत्तिधर्मावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारतावैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदक-

भिन्नद्वयावृत्तिधर्मावच्छिन्नविशेष्यतानिरूपितत्वञ्चैतदुभयसम्बन्धेन बोध्यम्। एतदुभयसम्बन्धघटकप्रकारतावैशिष्ट्यं च स्वनिरूपितविशेष्यतावच्छेदकेतरधर्मावच्छिन्नविशेष्यतानिरूपितत्वसम्बन्धेन । त्रित्वाद्युत्पादकाले नियमतो द्वित्वाद्युत्पादस्वीकारे तु उक्तत्रितयसम्बन्धघटकतृतीयदलं न देयम्। त्रित्वाद्युत्पादिकानामयमेकोऽयमेकोऽयमेक इत्याद्यपेक्षाबुद्धीनामनुगमोऽप्यनयैव दिशा करणीयः।

न चोक्तपरम्परायाः संसर्गत्वं न शास्त्रकारसम्मतमिति वाच्यम्, अपेक्षाबुद्धिविषयत्वतात्पर्य्यकं द्वयोर्द्विवचनं बहुषु बहुवचनमित्युक्तवतां भगवत्पाणिन्यादीनां तादृशपरम्परायाः संसर्गत्वे सुव्यक्तसम्मतेर्दृष्टत्वात्। तस्या असंसर्गत्वे सकलद्विवचनबहुवचनानां दुर्भिक्षता प्रसज्येत। तत्रस्थितस्य द्वयोर्बहुष्वित्यस्य गुणरूपसंख्यापरत्वाभावोऽग्रे दर्शयिष्यते। तादृशविषयत्वमेव द्विवचनबहुवचनयोरर्थ इति व्युत्पत्तिवादे महामहोपाध्यायगदाधरभट्टाचार्यैरपि प्रदर्शितम्। एतेन—

संख्यात्वव्याप्यसामान्ये वृत्तिमान् प्रत्ययस्तु यः।
सा विभक्तिर्द्विधा प्रोक्ता सुप्तिङौ चेतिभेदतः॥

इति शब्दशक्तिप्रकाशिकायां जगदीशप्रदर्शितविभक्तिलक्षणं प्रत्युक्तम् विभक्तिप्रतिपाद्यापेक्षाबुद्धिविषयत्वे संख्यात्वव्याप्यजातेरसत्वात्। एवञ्च अपेक्षाबुद्धिविषयत्वरूपद्वित्वादीनामपि संख्यापदेनाभिलापः सकलसम्प्रदायसम्मत एव पाणिन्यादीनां तदर्थपरतत्पदघटितबहुतरसूत्राणां दृष्टत्वात्। तत्र च संख्यात्वं न जातिस्तदाश्रयस्य द्रव्यगुणकर्म्मानात्मकत्वात् परन्तु गुणात्मकसंख्याजनकाऽपेक्षाबुद्धिविषयतात्वमखण्डोपाधिरूपं वाऽनुगतं तत्। न च गगनादीनां गुणरूपैकत्वविरहेण तादृशैकत्वघटितापेक्षाबुद्धेरनुगताया अपि गगनाद्यन्तर्भावेणासम्भवात् तत्रैकत्वरूपाऽसमवायिकारणविरहाच्च कथं द्वित्वाद्युत्पत्तिः सम्भवेदिति वाच्यम्, तन्त्वादौ त्रित्वाद्युत्पादकताया सिद्धानामेकत्वगुणानामुत्पादार्थं एकत्वं

प्रति द्रव्यत्वेन लघुरूपेण हेतुत्वस्य, एकत्वधारावारणार्थं एकत्वं प्रत्येकत्वस्य प्रतिबन्धकतायाश्च कल्पनाऽऽवश्यकतया एकत्वधाराया अनुत्पादनिर्वाहाय गगनादौ नित्यैकत्वस्वीकाराऽऽवश्यकत्वात्। एवञ्च गगनादौ स्वसामग्रीबलेन सम्पादितद्वित्वादिगुणानां वारणं गीर्व्वाण-गुरुणापि न हि शक्यते। इति प्राचीनन्यायविदां पन्थाः।

वस्तुतस्तु द्वित्वाद्यंशेऽपि साक्षात्कारतानिर्व्वाहायाऽपेक्षाबुद्धिविषय-तातः पृथगेव द्वित्वादिगुणः स्वीकर्त्तव्यः, घटादिविषयत्वाद्यंशे साक्षात्का-रस्य सर्व्वैरेवाऽनभ्युपगमात्। अन्यथा तत्र कदा पुमन्तरीयज्ञानादिविषयत्वं कदा वा नेत्यादिकं चक्षुरादिनाऽवधार्य्येत, अव्याप्यवृत्तिकपिसंयोगतदभा-वादिवत्। न च तत् लौकिकविषयत्वमेवास्तां तावतापि का क्षतिरिति वाच्यम्, यत्किञ्चिद्विवरान्तर्गतविषधरादौ प्रमाणान्तरेण द्वित्वादेर्बाध-भ्रमोत्तरं दृशा जन्यमानस्य द्वित्वादिप्रत्यक्षस्य तदंशे साक्षात्काराऽनात्म-कत्वे जनितुमक्षमत्वात् साक्षात्कारान्यविशिष्टबुद्धौ बाधनिश्चयस्य प्रतिबन्धकत्वात्। एवञ्च घटादाविव गुणादावपि तदंशे साक्षात्कारा-विशेषेण गुणादावपि गुणात्मकं द्वित्वादिकं निराबाधमेव। एकत्वरूपा संख्यापि द्वित्वाद्यसमवायिकारणतया तत्रावश्यकी। अतीन्द्रियमप्येकत्व-द्वित्वादिकं दर्शितानुगतकारणबलेन जन्यते। एतेन द्व्यणुकादीनामनङ्गी-कारपक्षे कस्मिन्नपि द्वित्वे परिमाणहेतुत्वं नास्त्येव इति किमनुरोधेन द्वित्वस्य गुणत्वसिद्धिर्भवेदित्यपि समाहितम्, साक्षात्कारविषयतयैव घटादौ गुणात्मकद्वित्वसिद्धेः। न च संख्या गुणरूपा क्रियारूपा वेत्यत्र विनिगमनाविरह इति वाच्यम्, तस्याः क्रियात्वे संयोगादिकं प्रति क्रिया-त्वेन हेतुतायाः सर्व्वसम्मततया संख्याश्रयसंयोगादेरपि संयोगस्वीकार-प्रसक्त्या तन्निबन्धना प्रामाणिकानवस्थाप्रसङ्गात्। न च क्रियात्वेन संयोगादिकं प्रति हेतुत्वं नाङ्गीकार्यमपि तु तद्व्याप्यस्पन्दत्वेनैव एवञ्च गुणादौ संख्यारूपक्रियासत्त्वेऽपि गुणादिकं स्पन्दते इति व्यवहाराभावेन गुणादौ स्पन्दाभावान्न तत्र संयोगविभापत्तिस्तदीयध्वंसप्रागभावाद्याप-

त्तिश्च इति वाच्यम्, क्रियात्वस्य तद्व्याप्यस्पन्दत्वस्य च द्वैविध्यकल्पनापेक्षया तदैक्यमङ्गीकृत्य संख्याया गुणात्मकत्वस्यैवौचित्यात्।

न च निखिलपदार्थेष्वेव गुणरूपद्वित्वादिस्वीकारे धीविशेषविषयत्वरूपपदार्थेष्वपि द्वित्वादिशब्दः कथं प्रयुक्तः प्राचीनैरिति वाच्यम्, "ब्रह्मणो वर्षशतमायुः।" "अष्टवर्षा भवेद् गौरी नववर्षा तु रोहिणी। दशमे कन्यका प्रोक्ता तदूर्ध्वञ्च रजस्वला" "त्रिंशद्वर्षो वहेद्भार्य्यां हृद्यां द्वादशवार्षिकीम्। "गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत्।" "संवत्सरं द्विमासोनं पुनस्तीर्थे व्रजेद्यदि। मुण्डनञ्चोपवासञ्च यत्नतः परिवर्जयेत्। इति वहुशः श्रुतिस्मृत्यादिदर्शनेन धीविशेषविषयत्वेऽपि द्वित्वादिपदवृत्तिस्वीकारावश्यकत्वात् संख्यारूपगुणतात्पर्य्येणैव तत्तत्प्रयोग उपपादनीय इति तु नाशङ्क्यं तत्तत्तावत्कालेषु द्वित्वादिगुणानामुत्पत्तुमक्षमत्वात् अनेकसमवेतगुणोत्पादे स्वयावदाश्रयाणामेवाऽव्यवहितपूर्व्वसत्त्वाऽपेक्षणात्। युगपदनवस्थायिकालादिवाचकपदोत्तरद्विवचनवहुवचनप्रयोगस्य साधुत्वार्थं द्विवचनवहुवचनविभक्तीनामपि धीविशेषविषयत्वपरत्वमेव पाणिन्याद्यभिमतम्। इति मादृशां रमणीयः पन्थाः।

व्यासज्यवृत्तिधर्म्मावच्छेदेन भेदानभ्युपगमे तु प्रत्यक्षं प्रति महत्त्वशून्यस्पर्शवद्भेदत्वेनैव स्वरूपसम्बन्धेन हेतुत्वं न तु प्रोक्तपरिमाणत्वेनेति।

अथ भवदुक्तकारणतायामवच्छेदकगौरवात् विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतावाहुल्याच्च मानसप्रत्यक्षे क्रियाभेदस्य कारणताकल्पनापत्तेश्च महत्त्वत्वेन एकमेव हेतुत्वं कल्पयितुमुचितम्। अतः सुतरामेवाऽतिरिक्तजीवाः सेत्स्यन्ति। इति चेन्न,—

स्वाऽनाश्रये सुखादीनां वारणाय भवन्मते।
कार्य्यकारणभावाच्च तत्रैवातीव लाघवम्॥ १२॥

अयमाशयः—तत्तद्व्यक्तिसमवेतानां जन्यानामन्येषूत्पादवारणार्थं स्वसमवेतत्वावच्छिन्नं प्रति तत्तद्व्यक्तित्वेन सर्वस्यैव समवेतानामधि-

२

करणस्य हेतुतायाः सर्वमत एव स्वीकरणमस्ति। एवञ्च अतिरिक्तजीव-कल्पनेऽनन्तजीवमन्तर्भाव्यापि जीवसमसंख्यकतत्तद्द्रव्यक्तित्वेन कारणता-कल्पनमावश्यकम्। अन्यथा एकजीवसमवेतानां जीवान्तरेषु जननमापद्येत। न च मनसां सुखादिमत्त्वस्वीकर्तृमतेऽप्येकमनःसमवेत-सुखादीनां मनोरूपजीवान्तरेषूत्पादवारणार्थं जीवान्तरवादिसमान एव कार्य्यकारणभाव इत्येतन्मते क्व लाघवम्। प्रत्युत प्रागुक्तरीत्या परिमाणस्य प्रत्यक्षकारणतायां क्रियाभेदस्य मानसकारणतायाञ्च गौरवमेव पर्य्यवसितमिति वाच्यम्, मनःपदार्थानां सर्व्वसम्मततया तदीयक्लृप्तगुणकर्म्मणां स्वानधिकरणेषूत्पादवारणार्थमुभयवादिसम्मत-कारणतयैव तद्गतसुखादीनामपि एकैकसमवेतत्वनिर्वाहेणाऽनन्तकार्य्य-कारणभावकल्पनकृतगौरवाऽनवकाशात्।

एवञ्च प्रोक्तगुरुरूपेणापि परिमाणस्य प्रत्यक्षकारणतायाः क्रियाभे-दस्य मानसकारणतायाश्च कल्पनेऽप्यनन्तातिरिक्तजीवान्तर्भावेणोक्तकार-णतातोऽतीव लाघवम्।

अथ मनो न पदार्थान्तरमपि तु पवनपरमाणुरेव तत्, इति भवदुक्त-प्रकारेण परिमाणस्य प्रत्यक्षकारणताकल्पनेऽपि मनसो महत्त्वशून्यत्वेन स्पर्शवत्त्वेन च प्रोक्तपरिमाणरूपकारणविरहात्तद्गतसुखाद्यप्रत्यक्षापत्तिः। इति चेन्न,—

त्रुटौ द्रव्यस्य विश्रामात् द्व्यणुकादेरलीकता।
प्रत्यक्षे षड्विधे तस्मात् परिमाणं न कारणम्॥ १३॥

अयमाशयः,—त्रुटिपर्य्यन्तानामेव मनोभिन्नाऽविभुद्रव्यत्वस्वीकारात् द्व्यणुकानां तदवयवपरमाणूनाञ्चालीकतैव। अतः प्रत्यक्षे परिमाणस्य कारणतैव नास्ति। परमाण्वादिसत्त्व एव तत्प्रत्यक्षवारणस्यैव महत्त्वत्वेन कारणताकल्पनप्रयोजनत्वात्। न च प्रत्यक्षविषयद्रव्यं सावयवं विभु-त्वाऽन्यमहत्त्ववत्त्वात् घटपटादिवदित्यनुमानेन पक्षीभूतत्रुटीनामवयवाः साधनीयाः, त एव चातीन्द्रिया द्व्यणुकसंज्ञकाः। ततः प्रत्यक्षविषयस्या-

वयवाः सावयवाः महदवयवत्वात् कपालतन्त्वादिवत् इत्यनुमानेन द्व्यणुकानामप्यवयवाः साध्येरन्। त एव परमाणुनामकाः। एवञ्चा-नुमानसिद्धपरमाण्वादीनां प्रत्यक्षवारणार्थं महत्त्वत्वेन कारणताकल्पना-वश्यकतया मनसां सुखादिमत्त्वे तेषां परमाणुरूपत्वेन तदीयसुखादी-नामप्रत्यक्षापत्तिरिति वाच्यम्, प्रत्यक्षविषयद्रव्यं महत्त्वशून्यासमवेतं जात्यन्यत्वे सति वाह्यप्रत्यक्षविषयत्वात् घटपटादितदीयगुणपवनस्पर्श-शब्दादिवदित्याद्यनुमानसाम्राज्येन त्रुटीनां महत्त्वशून्यासमवेतत्वसिद्धा-वर्थत एव द्व्यणुकपरमाण्वसिद्धेः। न चैवमपीदृशानुमानेन पवनीय-द्व्यणुकादीनामलीकता नायाति पवनानां प्रत्यक्षाविषयत्वात्। एवञ्च तदीयद्व्यणुकादिस्पर्शस्य स्पार्शनवारणार्थं प्रत्यक्षे महत्त्वस्य हेतुत्वमव-श्यमभ्युपेतव्यमिति वाच्यम्, एतावता वरं स्पार्शन एव महत्त्वस्य कारणताया वक्तव्यत्वात्। वायोरपि स्पार्शनस्वीकारेणोक्तानुमानकव-लितत्वाच्च। वायोरप्रत्यक्षमते द्रव्यं महत्त्वशून्यासमवेतं परिमाण-वत्त्वात् त्रुट्यादिकं महत्त्वशून्यासमवेतं महत्त्ववत्त्वाद्वेत्यनुमानेन सर्व-सामञ्जस्यात्। न च द्व्यणुकादिसिद्ध्यनुगुणानुमानयोरपि प्राग्दर्शि-तत्वेन तद्बलेनापि न कथं तेषां सिद्धिर्भवेदिति वाच्यम्, सत्प्रतिपक्ष-सम्वलने द्वयोरेवासिद्ध्या द्व्यणुकाद्यसिद्धावेव पर्य्यवसानात् भवदभि-प्रेतानुमानप्रणाल्या परमाणूनामप्यवयवस्य साधयितुं शक्यतया उक्ता-नुमानविषयहेतोरप्रयोजकत्वशङ्काकवलितत्वाच्च। अथाऽनवस्थाभयेन परमाणूनामवयवाः सेद्धुं नार्हन्ति अन्यथा मेरुसर्षपयोः साम्यं प्रसज्येत। इति चेत्, परमाणूनां सावयवत्वसिद्धावेव भवतामनवस्थाप्रसङ्गभयं त्रुटीनां पुनरप्रामाणिकावयवादिसिद्धौ न तथा प्रसङ्गः। अस्य तु रहस्यं भवन्त एवानुभवितुं प्रभवः सन्तु। वस्तुतस्तु अस्मत्प्रदर्शितोक्ता-नुमानेन प्रोक्तासमवेतत्वसिद्धौ द्व्यणुकाद्यनन्तपदार्थान्तराऽकल्पनकृतं लाघवम्। युष्मत्प्रदर्शितानुमानेन तु अनन्ततत्कल्पनप्रयुक्तं महागौरव-मित्यादिप्रतिसन्धानरूपतर्कस्यास्मदभिमतसिद्ध्यनुगुणत्वात्।

एवञ्च प्रत्यक्षे परिमाणस्य कारणतैव नास्तीति किं महत्त्वानुसन्धानेन। मानसे क्रियाभेदत्वरूपगुरुधर्म्मेण कारणत्वावश्यकत्वेऽपि परस्परानधिकरणेषु समवेतकार्य्योत्पादवारणार्थं भवन्मतेऽनन्तकार्य्यकारणभावकल्पनकृतं गौरवं सुदृढमेव। तार्किकेषु सुप्रसिद्धनिबन्धनकृद्भी रघुनाथशिरोमणिभिः स्वकृते पदार्थखण्डनग्रन्थे द्व्यणुकानां परमाणूनाञ्चाप्रामाणिकत्वमुक्तम्। अतस्तदनङ्गीकारे नापसिद्धान्तभीतिरपि।[१]

अथ द्व्यणुकादिरूपाऽणुतरद्रव्यमप्रामाणिकं भवेच्चेद् भवतु तत्स्वीकारपक्ष एवास्माभिरपि प्रत्यक्षे महत्त्वस्य कारणत्वं व्यवस्थापितम्।

---

(१) अत्र यत्तु "तत्त्वसारविचार" ग्रन्थे "......त्रुटित्र्यणुकत्रसरेणुशब्दानां पर्य्यायता सर्व्वसम्मता। शब्दे पर्य्यायत्वं च एकार्थवाचकत्वे सति विभिन्नानुपूर्व्वीकत्वम्। तथा च त्रयः अणवो विद्यन्ते यस्मिन् स त्र्यणुक इति व्युत्पत्त्या त्र्यणुकस्य सावयत्वमव्याहतमेव। अत्राणुपदं द्व्यणुकपरम्। एवं द्वौ अणू विद्येते यस्मिन् स द्व्यणुक इति व्युत्पत्त्या लब्धं द्व्यणुकस्यापि सावयत्वम्। अत्राणुपदं परमाणुपरमतः परमाणावेव विश्रामो न त्रुटाविति।" इत्युक्तम्, तत्तुच्छम्, यतस्त्र्यणुकपदस्य परिभाषया त्रुटिरूपतादृशनिरवयवद्रव्यबोधकत्वसम्भवेन नानुपपत्तिगन्धोऽपि। एवम् "पृथिव्यादिनिरूपणावसरे सा द्विविधा नित्याऽनित्या च। परमाणुलक्षणा नित्या इत्यादिभाष्योक्तेश्च परमाणुसिद्धिरप्रत्यूहा। तथा च त्रुटावेव विश्राम इति वदन् न केवलं नव्यः किन्तु दीधितिकारोऽपि परास्तः।" तत्रत्य इत्यपि प्रलापः प्रलाप एव। यतो दर्शनस्य युक्तिप्रधानत्वात् न हि कस्यचिद् ग्रन्थकर्त्तुर्विरुद्धोक्तिर्वस्तुसाधिका भवितुमर्हति। भाष्याद्युक्त्यैव परमाणुसिद्धौ तत्साधकानुमानप्रदर्शनप्रयासो वैफल्यमापद्येत। तथा च महर्षीणामपि कपिलकणादादीनां मतखण्डने परमास्तिकाः शङ्कराचार्य्यादयो भियमणीयसीमपि नासादितवन्तः। अत एव "अहरहः सन्ध्यामुपासीते"त्याज्ञाशास्त्रोपदेशकाले नोपलभ्यते युक्तिमयसूक्तिलेशोऽपि। इत्थं च गोतमादीनां विधिनिषेधबोधकालौकिकवाक्याऽस्वीकरण एव दोषः, न तु तदुक्तयुक्तिशास्त्राऽनङ्गीकारे। तदुक्तं विष्णुपुराणे—

"न ह्याप्तवादा नभसो निपतन्ति महासुराः।
युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः॥"—

(तृतीयांशः, १८ अ०, २९ श्लो०ः)

तदनङ्गीकारे तु जीवस्यातिरिक्तत्वपक्षेऽपि महत्त्वस्य कारणत्वं परित्याज्यमेव। तथा च मनसां जीवत्वे तदीयकर्म्मपरत्वापरत्ववेगाख्यगुणानां मानसवारणार्थं मानसं प्रति क्रियाभेदपरत्वभेदापरत्वभेदवेगभेदानां कारणत्वकल्पने तासां वाहुल्यमवच्छेदकगौरवञ्च। अतस्तत्तद्गुणशून्याचञ्चलजीव एव कल्पयितुमुचितः। एवं स्वसमवेतत्वावच्छिन्नं प्रति प्रत्येकजीवानां कारणत्वकल्पनकृतोदीच्यगौरवप्रतिसन्धानमपि नातिरिक्तजीवकल्पनां प्रतिवन्धुं प्रभवेत्। यतस्तादृशजीवसिद्धिमूलकमेवोक्तगौरवं प्रतिसन्धीयते सिद्धस्त्वपलपितुं न हि शक्यते। अत एवानन्तसंयोगतद्ध्वंसप्रागभावकल्पननिवन्धनोदीच्यगौरवज्ञानसम्भवेऽपि एकधर्मिणि गगनसंयोगादेर्नानात्वं प्रथमतः कार्य्यकारणभावकल्पनलाघवबलेन साधितं सकलसाम्प्रदायिकैः। इति चेन्न,

अनध्यत्वाददृष्टादेर्यतो जीवगमानसे।
अवच्छिन्नतया देहहेतुता सर्व्वसम्मता॥ १४॥

अयमाशयः। भावनाख्यसंस्कारधर्म्माधर्मरूपाऽदृष्टात्मगतपरिमाणैकत्वादिमानसवारणार्थमुक्तप्रत्येकधर्म्मावच्छिन्नभेदहेतुत्वकल्पनापेक्षया जीवसमवेतेषु संवेदनविषयाणामिच्छाद्वेषसुखदुःखकृतिमतीनामेव देहरूपद्रव्यावच्छिन्नत्वस्य सर्वानुभवसिद्धतया जीवसमवेतानां द्रव्यसमवेतानां वा मानसं प्रति देहत्वेन द्रव्यत्वेन वा धर्म्मेण अवच्छिन्नत्वसम्बन्धेन एकमेव हेतुत्वं भवताऽप्यङ्गीकृतम्। अस्मन्मतेऽपि तेनैव कारणबलेन सुखादीनामेव प्रत्यक्षं न तु मनसः कर्म्मादीनामपि तदीयेषु तेषु शरीरानवच्छिन्नत्वस्य सर्वसम्मतत्वात्। एवञ्चाऽनन्तातिरिक्तजीवानामकल्पनकृतं लाघवं सुदृढमेव। न चात्मत्वजातिमानसे व्यभिचारापत्तिभयेन प्रोक्तकार्य्यकारणभावो न केनाऽप्यनुमत इति वाच्यम्, आत्मत्वसाक्षात्कारस्यैवाऽनभ्युपगमात् यस्मिन् साक्षात्कारे व्यभिचारमाशङ्कसे। अन्यथा साक्षात्कृतवस्तुनः सुखादेरिव विवादाऽनर्हतया तादृशजातौ विवादास्पदत्वभङ्गः प्रसज्येत। ज्ञानवत्त्वादिनाऽऽत्मव्यवहार-

मुपपाद्य गदाधरभट्टाचार्य्येणाऽनुमितिग्रन्थे आत्मत्वजातेरनङ्गीकाराच्च। एवम् आत्मत्वजातिस्वीकारेऽप्यात्मनि सत्ताद्रव्यत्वजातिसत्त्वेऽपि च तदंशे साक्षात्कारो न केनाऽप्यनुमतः सत्ताद्रव्यत्वजातिप्रत्यक्षे तन्न्यून-वृत्तिजातिसाक्षात्कारस्य हेतुत्वात्। अत एव घृतजतुप्रभृतिषु द्रव्यत्व-न्यूनवृत्तिजातेः साक्षात्कारविरहेण द्रव्यत्वं न प्रत्यक्षसिद्धा जातिरिति प्राचीनैरुक्तम्, अपि तु तास्वलौकिकी विषयतैव।

अत एव 'धर्म्माधर्म्माश्रयोऽध्यक्षो विशेषगुणयोगतः'। इति। 'मनो-ग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः।' इति च प्राचीनैरुक्तम्। सुख-त्वादिवद्दृष्टत्वादिसाक्षात्कारापत्तिस्तु योग्यवृत्तित्वाभावाद्वारणीया। एवमतिरिक्तजीवकल्पनपक्षे सुषुप्त्यादिदशायां ज्ञानवारणाय तत्तत्पुरुषी-यसुखाद्यन्यविषयकज्ञानसामान्यं प्रति ज्ञानसामान्यं प्रति वा तत्तत्पुरुषीय-त्वङ्मनोयोगत्वेन गुरुरूपेण हेतुत्वे गौरवम्। अस्मन्मते तदनन्तर्भाव्य सम-वायेन ज्ञानसामान्यं प्रति त्वक्संयोगत्वरूपलघुरूपेणैव हेतुत्वं कल्पनी-यमिति मनोजीवत्वपक्ष एव साधीयान्। एवञ्च प्रागभावस्वीकृन्मते श्रावणसम्पादकतयाऽऽकाशस्य परममहत्त्वरूपपरिमाणमपि न स्वीक्रियते। सुतरां दिक्कालपरमेश्वराणाम्। न च गगनं परममहदिति व्यवहारेण तत्र तत् सिध्येदिति वाच्यम्, तादृशव्यवहारस्याप्रामाणिकत्वात्। अन्यथा तादृशव्यवहारबलात् गगनसिद्धेरपि सहजत एव सम्भवेन कुतर्ककण्टका-वृतानुमानात् शब्दसमवायितया प्राचां तत्सिद्धिप्रयासो वैफल्यमाप-द्येत। न च तस्याऽतथात्वेऽपि ईश्वरः परममहानित्यादिव्यवहारस्य सक-लास्तिकसम्प्रदायसम्मततया परमेश्वरे परममहत्त्वं दुरपह्नवमेवेति वाच्यम्, परोपकारिमनुजेषु महत्त्वव्यवहारवत् परमकारुणिके परमेश्वरे परमम-हत्त्वव्यवहारस्यार्थान्तरविषयकत्वेनोपपत्तेः। भगवानपरिमेय इत्यादि-रूपस्य तद्विरोधिव्यवहारस्य जागरूकत्वाच्च। अथ प्रत्यक्षाविषयाऽणुत्वा-दिकमप्यसिद्धं स्यादिति चेन्न, अणुत्वपरिमाणत्वेन परिमाणत्वेन वा क्रियाहेतुत्वावश्यकतया सक्रियमात्रस्यैव परिमाणसिद्धेरावश्यकत्वात्।

यत्तु गुणगुणिनोरभेदात् गुणानां द्रव्यस्वरूपतया किं परिमाणस्य द्रव्यविशेषे सत्त्वासत्त्वविवेचनया । अत एव गन्धवायुस्पर्शादिवत् घटपटादिगतं गुणक्रियादिकमेवेन्द्रियैर्गृह्यते न तु घटपटाद्यात्मकं द्रव्यमपि । द्रव्यग्रहस्तु वायुवाय्वानीतसुरभिभागगगनग्रहणवत् अनुमानादिनैव सम्भवति । अन्यथा वाय्वादेरपीन्द्रियग्राह्यतास्वीकारापत्तेरिति प्रत्युक्तं गुणानां द्रव्यस्वरूपतया गुणप्रत्यक्षे जायमाने द्रव्यप्रत्यक्षस्यार्थवशात्सम्पन्नत्वात् । न च तयोरभेदे गन्धानां चाक्षुषादिकं रूपादेः स्पार्शनं स्पर्शादेश्चाक्षुषमापद्येति वाच्यम्, न्यायमते स्वरूपसम्बन्धात्मकप्रतियोगिताविषयताधेयत्वाधिकरणत्वादेः स्वाश्रयादिस्वरूपतया तेषां चाक्षुषादिवत् उक्तगुणानामपि चाक्षुषादेरिष्टत्वात् परन्तु प्रतियोगितात्वरूपाऽखण्डोपाधिवत् गन्धत्वादेश्चाक्षुषादिविरहेण गन्धत्वादिप्रकारेण गन्धादिचाक्षुषादिकं न जनितुमीष्टे । अत एव "यः सर्वज्ञः सर्वविदि"तिश्रुतेः "नित्यं विज्ञानमानन्दं ब्रह्मेति" श्रुतेश्च द्वयोरेव सुष्ठूपपत्तिः । नित्यज्ञानरूपगुणस्य विश्वव्यापिद्रव्यात्मकपरमात्मनश्चाभेदात् । यदि च गुणमात्रस्यैव स्वाश्रयद्रव्यस्वरूपत्वे रूपरसकपिसंयोगाऽनेकपर्य्याप्तात्मकाऽव्याप्यवृत्तिगुणानां स्वाश्रयद्रव्यप्रत्यक्षदशायां नियमतः प्रत्यक्षं स्यात् । न च नित्यस्यापि रूपत्वादेरत्यन्ताभावविशेषवदव्याप्यवृत्तित्वमभ्युपगन्तव्यमिति वाच्यम्, जात्यखण्डोपाधीनामव्याप्यवृत्तित्वस्य सिद्धान्तविरुद्धत्वात् तेषां सामयिकसत्त्वासत्त्वप्रयोजकदौर्भिक्ष्याच्च । अत्यन्ताभावविशेषस्याव्याप्यवृत्तितानिर्वाहकन्तु प्रतियोग्यसत्तादिकम् । इति यदि विभाव्यते तदा व्याप्यवृत्तीनां परिमाणपृथक्त्वैकत्वस्पर्शगुरुत्वनित्यज्ञानादीनामाश्रयस्वरूपत्वमुपगन्तव्यं न तु तदन्यगुणानामपि । परिमाणत्वादीनान्तु द्रव्यधर्म्माणां न गुणत्वव्याप्यत्वमपि तु द्रव्यत्वव्याप्यत्वमेव । अस्योपरि केचन प्राचीना दूषणं कल्पयन्ति । तेषां पुनरयमभिप्रायः । यद् यद् द्रव्यं येन येनेन्द्रियेण गृह्यते तत्तदियाऽग्राह्याणां तत्तद्द्रव्यधर्म्माणां तत्तदि-

न्द्रियग्राह्यताचारणाय तत्तदिन्द्रियजप्रत्यक्षे यथासम्भवं तत्तद्धर्म्म-भेदत्वेन कारणत्वमवश्यं सर्वमत एव वक्तव्यम्। एवञ्च तदितरा-वृत्तित्वे सति सकलतद्वृत्तित्वरूपतत्तज्जातित्वादिनाऽतिगुरुणा तत्तज्जा-त्यादिभेदानां बहुतरकारणताकल्पनापेक्षया स्पर्शगुरुत्वादीनां गुणान्तरत्वं स्वीकृत्य स्वरूपतस्तत्तज्जातिरूपातिलघुधर्म्मेण तादृशतादृशगुणभेदानां यथासम्भवं प्रत्यक्षकारणत्वं युज्यत एव। न चैतन्मतेऽपि तत्तदिन्द्रियसंयु-क्तसमवेतसमवायरूपसन्निकर्षबलात्तत्तज्जातिप्रत्यक्षवारणार्थं तत्तज्जाति-भेदत्वेन कारणत्वमावश्यकमिति क्व लाघवं तत्तद्गुणभेदत्वेन कारणत्वं पुनरतिरिच्यते इति वाच्यम्,एतन्मते तत्तज्जातिभेदत्वेन कारणत्वमनभ्युप-गम्य योग्यवृत्तित्वेनैव स्वल्पतरकारणताया अभ्युपगमात्। योग्यत्वं हि यथायथं चाक्षुषादिविषयत्वम् । न चैतान्यपि कारणत्वानतिरिक्ता-न्येवेति वाच्यम्, अतिगुरुशरीरजातिभेदत्वेन कारणताकल्पने जातिघटक-पदार्थानां मिथो विशेष्यविशेषणभावे विनिगमनाविरहेण कार्य्यकारण-भावाऽतिबाहुल्यापत्तेर्वज्रलेपत्वात् रूपत्वादीनां त्वाचादिवारणार्थं योग्य-वृत्तित्वेन कारणत्वस्योभयमत एव क्लृप्तत्वाच्च। नवीनाः पुनः तत्तद्व्यक्तित्व-स्याखण्डोपाधिरूपतया तत्तद्व्यक्तित्वेनैव तत्तज्जातिभेदानां कारणत्वम-भ्युपगन्तव्यं न तु गुरुशरीरजातित्वेन एवं परिमाणैकत्वैकपृथक्त्वपर-मेश्वरज्ञानादेः स्वाश्रयस्वरूपत्वे किञ्चिदपि बाधकं नेक्षामहे। तावतापि प्रागुक्तश्रुतिद्वयोपपत्तिः साधीयसी साधीयसी च द्रव्यप्रत्यक्षोपपत्तिः। एवं सजातीयपरिमाणाद्युत्पादे परिमाणादीनां स्वाश्रयसमवेतत्वरूपगुरुस-म्बन्धेन कारणत्वं सम्भवदुक्तिकम् । न च गुणगुणिनोरभेदे द्रव्येषु परिमाणादिकं वर्त्तते इति व्यवहारस्याप्रामाण्यापत्तिः पदार्थयोरभेदे आधारसप्तम्यनुपपत्तेः । अन्यथा गगने गगनमित्यपि व्यवहारः प्रमाणं स्यात् इति वाच्यम्, न्यायमते प्रतियोगित्वादेः स्वाश्रयादिरूपत्वेऽपि घटे घटाभावप्रतियोगित्वमित्यादिव्यवहारवत् घटाभावे घटो नास्तीत्या-दिव्यवहारवच्च द्रव्येषु परिमाणादिकम् इतिव्यवहारेऽपि प्रामाण्यस्योप-

पादयितुं शक्यत्वात्। अथ बहव एव नैयायिका गुणगुणिनोरभेदं नाङ्गीकृतवन्त इत्यधुनातनव्यक्तीनां तयोरभेदस्वीकरणं पुनरतीव साहसम् इति चेत्, गुणगुणिनोरभेदवादिनोऽपि बहवो विद्वांसो दृश्यन्ते। कतिपयास्तु लोकास्तन्मतविरुद्धं प्रलपितवन्तः । एतावतैषामपि साहसं किं नावलोकयथ। तस्मान्मतद्वयसत्त्वे युक्तिसिद्धपदार्थस्वीकरणे कोऽयमनुयोग इति परिमाणादिगुणतदाश्रयाणामभेदं निपुणतरमुपपादयन्ति नव्याः। वस्तुतो दिक्कालाकाशानां पदार्थान्तरतैव न स्वीक्रियतेऽतः किं तेषां महत्त्वरूपपरिमाणानुसन्धानेन शशशृङ्गपारिमणानुसन्धानसमत्वात् तत्सन्धानस्येति। जन्यमूर्त्तमात्राणामेव दिक्त्वं क्रियादिजन्यसमुदायस्यैव कालत्वं तेषां तत्त्वस्य महादिङ्महाकालाङ्गीकृद्भिरपि स्वीकृतत्वात्। न च महाकाले सर्व्वमित्यादिव्यवहारस्य 'कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्त्तत' इत्यार्षस्य च प्रामाण्यानुरोधेन क्रियाद्यतिरिक्तेऽपि कालत्वमास्तामिति वाच्यम्, तादृशव्यवहारस्य सर्व्वज्ञाद्यप्रयुक्ततया सन्दिग्धप्रामाण्यकत्वात्, 'मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकर' इतिवत् कालधाराया उत्कर्षबोधकत्वेन तत्तदार्षोपपत्तेश्च।

गगनमपीश्वरस्वरूपमेव न तु ततोऽन्यदपि तत्प्रमाणाभावात् सुतरां शब्दाश्रयत्वमीश्वर एव स्वीक्रियते। न च भगवति तत्स्वीकारे शब्दश्रावणवत् तदीयज्ञानेच्छाप्रयत्नानामपि श्रावणापत्तिः, हेतोरविशेषादिति वाच्यम्, गगनस्य पदार्थान्तरत्ववादिनयेऽपि तदेकत्वादिश्रावणवारणार्थं तत्समवेतानां श्रावणं प्रति शब्दत्वेन कारणत्वान्तरस्य शब्दनिष्ठसमवायसम्बन्धेन श्रावणकारणताया वा भवन्मतेऽप्यावश्यकतया मन्मतेऽपि तत एव परमेश्वरसमवेतज्ञानादीनां श्रावणापत्तिवारणसम्भवात्। अत एव यथा "आयुर्घृतम्" "आत्मा वै जायते पुत्रः" "सर्व्वं विष्णुमयं जग" दित्यादिप्रयोगोपपादकं जन्यजनकयोरभेदोपचारस्य स्वारसिकत्वम्, तथा गुणगुणिनोरभेदोपचारस्य स्वारसिकत्वं सर्व्वज्ञे सर्व्वविषयकेच्छावति परदुःखहरणेच्छारूपदयावति च भगवति चिन्मयेच्छामयकरुणामयेत्यभिलापस्येव शब्दमयं

ब्रह्मेत्यभिलापस्य सुष्ठूपपादकमेव। गुणगुणिनोरभेदोपचारस्य स्वारसिकत्वं लोकेऽपि दृश्यते, यथा—शृङ्गारादिरससम्पन्नायां रमण्यां रसमयीत्यभिलापः सद्गुणसम्पन्ने च पुंसि गुणमय इत्याद्यभिलापश्च। वैदान्तिकानामुपचारं विना चिन्मयेत्यभिलापसम्भवेऽपि अपरप्रयोगाणामशक्यसमाधेः। "यः सर्वज्ञः सर्व्ववित्" "यस्य ज्ञानमयं तप" इत्यादिश्रुतिविरोधाच्च तन्मतमश्रद्धेयम्। एतेन शब्दाश्रयतयाऽऽकाशरूपपदार्थान्तरकल्पनापेक्षया तत्र वाय्वाश्रितत्वमेव कल्पयितुं युक्तम्। न च शब्दो न वायुविशेषगुणः स्वाश्रयनाशाधीननाशाप्रतियोगिविशेषगुणत्वात् यन्नैवं तन्नैवं वायुस्पर्शवत्। इति व्यतिरेकतः, यत्र हेतुस्तत्र साध्यमात्मगुणादिवदित्यन्वयतश्च दृष्टान्तं कृत्वाऽनुमानेन शब्दानां पवनाऽनाश्रितत्वसिद्धावनायत्या तद्धर्म्मितयाऽऽकाशरूपपदार्थान्तरं सिध्येदिति वाच्यम्, शब्दो वायुसमवेतः रूपशून्यद्रव्यसमवेतत्वे सति वाह्यप्रत्यक्षविषयत्वात् सत्ताद्रव्यत्ववायुस्पर्शवदित्यन्वयादितो दृष्टान्तं कृत्वाऽनुमानस्याऽपि सम्भवेनोक्तहेतोः सत्प्रतिपक्षकवलितत्वादित्यपि समाहितम्।

मन्मते क्लृप्तपरमेश्वर एव शब्दाश्रयत्वोपगमेनाऽक्लृप्तकल्पनानिवन्धनगौरवाऽनवकाशात्। अनन्तपवनेषु शब्दाश्रयत्वकल्पनापेक्षया क्लृप्तैकभगवति तत्कल्पनायां लाघवाच्च। एतेनोक्तसत्प्रतिपक्षस्य जागरूकत्वात् भगवत्यपि शब्दस्याश्रयत्वं न सम्भवतीति परास्तम्, उक्तलाघवरूपयुक्तिवलेन सत्प्रतिपक्षस्य वलहीनत्वात्। अत एव कालदिशोर्भगवद्वाचकमनन्तनिर्द्देशमनभिधायाऽऽकाशवाचकतया तन्निर्द्देशोऽभिहितः शास्त्रकारैरिति।

अथ निर्वातयन्त्रादौ शब्दानुत्पत्तिदर्शनात् अकामेनापि तेषां पवनाश्रितत्वमङ्गीकर्त्तव्यम् इति चेन्न,—

शब्दोत्पादेऽभिघातस्य पवने सहकारिता।
कल्प्यते कलसोत्पादे मृत्तिकादेस्तु दण्डवत् ॥ १५ ॥

अयमाशयः। केवलमृदादिसत्त्वे घटोत्पादवारणार्थं यथा घटं प्रति

मृत्तिकादिसहकारित्वं दण्डादौ कल्पनीयं तथाऽभिघाताख्यसंयोगरूपस्य शब्दकारणस्य सहकारित्वरूपनिमित्तकारणत्वं वायौ कल्प्यते नातो निर्व्वातदेशे शब्दोत्पत्तिः। न हि सहकारिकारणमात्र एव कार्य्याव-स्थानमिति नियमः। न च यत्कारणनिवृत्तौ यत्कार्य्यनिवृत्तिः स्यात् तत्कार्य्यं तत्कारणसमवेतं भवतीत्येव नियमः सर्व्वसम्मतः। यथा कपालविनाशे घटनिवृत्तेर्घटादिविनाशे च तत्कार्य्यरूपादिनिवृत्तेस्तत्र तत्र कार्य्यावस्थानं सर्व्वसम्मतम्, तथा वायुनिवृत्तौ शब्दनिवृत्तिदर्श-नेन शब्दे वायुसमवेतत्वमुचितं न तु घटादौ दण्डादि-समवेतत्वमपि दण्डादिविनाशेऽपि स्वकार्य्यघटादेश्चिरावस्थानस्य दृष्टत्वादिति वाच्यम्, तादृशनियमे व्यभिचारात्। अन्यथाऽऽलोकरूपकारणविनाशे चाक्षुषनिवृत्तिदर्शनेन चाक्षुषेऽप्यालोक-समवेतत्वमापद्येत, दहननिवृत्तौ सुवर्णादेर्द्रवत्वनिवृत्तिदर्शनेन दहनसमवेतत्वमपि तदीयद्रवत्वे च। न च सहकारित्वरूपनिमित्तहेतुत्व-कल्पने शब्दसमवायिकारणत्वान्तरकल्पनापत्तिरतो वायोरेव तत्सम-वायिकारणत्वकल्पनमुचितमिति वाच्यम्, वायुस्पर्शसंख्यापरिमाणादेः स्पार्शनस्येव शब्दानां स्पार्शनस्यापत्तिवारणार्थं वायुसमवेतस्पार्शनं प्रति शब्दभेदत्वेन गुरुधर्म्मेण कारणत्वकल्पनापेक्षया शब्दं प्रति वायुत्वजातिरूपलघुधर्म्मेणेव निमित्तहेतुत्वस्यैवौचित्यात् यद्देशावच्छे-देन वायुसंयोगस्तद्देशावच्छेदेनैव शब्दोपत्तिदर्शनात् अवच्छेदकता-सम्बन्धेनैव तयोः कार्य्यकारणभावः स्वीकर्त्तव्यः।

अथ सौभरिप्रभृतिमहर्षीणामेकदा शतशरीरादिधारणम् आर्षे-तिहासप्रतिपादितं जीवस्य महत्त्वपरिमाणमन्तरेण नोपपद्यतेऽतः सुत-रामेव प्राचीननैयायिकमतं समीचीनमिति चेत्, भो भोः प्राचीननैया-यिका युष्माभिर्युक्तिसायका इदानीं किं कान्तारे प्रस्थापिताः, साधु साधु कथञ्चिदपि पुरावृत्तपथमनुसरथ। तन्मार्गोऽपि न श्रेयसे युष्माकम्। तत्तन्महर्षीणां क्षुद्रतरस्यापि मनोरूपजीवस्योत्कटतपःप्रभावेण

यथाकामं शरीरान्तरेष्वाशुसञ्चारतात्पर्य्यविषयतयैव एकशरीर एव शतशरीरसम्भोगसामर्थ्यतात्पर्य्यविषयतया वाऽऽर्षोपपत्तेः। अन्यथेतिहासानुरोधेन प्रागुद्दर्शितश्रुत्यादेः (कामः सङ्कल्प इत्यादेरिति) यथाश्रुतार्थकत्वं विलोप्येत।

अथ नव्यमते जीवादीनां पदार्थान्तरत्वास्वीकारे तन्मते पदार्थाः कतिविधाः। इति चेत्,

द्वैविध्यं स्यात् पदार्थानां भावाऽभावप्रभेदतः।
भावांस्तु षड्विधानाहुरभावांस्तु चतुर्विधान्॥ १६॥

अयमाशयः। जगति पदार्थौ भावनामकोऽभावनामकश्च। तत्र भावत्वमखण्डोपाधिरेवानुगतप्रत्ययबलेन सिद्धः। अभावत्वन्तु भावभिन्नत्वमेव तावताऽप्यभावानामनुगतप्रत्ययनिर्व्वाहात्। न चाभावत्वमेवाखण्डोपाधिर्भावत्वन्तु अभावभिन्नत्वमित्यपि वक्तुं शक्यतया विनिगमनाविरहेण द्वयोरेवाखण्डोपाधित्वमुचितम्, एकशेषस्य कर्त्तुमशक्यत्वादिति वाच्यम्, भावनाशं प्रति जन्यभावत्वेन सामान्यतः कारणताया गदाधरभट्टाचार्य्याद्युक्ततया तादृशकारणतावच्छेदकत्वेन तन्नाशरूपकार्य्यघटकत्वेन च लाघवतो भावत्वरूपाऽखण्डोपाधित्वसिद्धेर्निष्प्रत्यूहत्वात्। एवञ्च भावभिन्नत्वेनैवाऽभावप्रतीत्युत्पत्तिसम्भवेन तत्राप्यखण्डोपाधिरूपपदार्थान्तरताकल्पनमप्रामाणिकम्। न च बाधाभावपक्षतादिनिष्ठकारणतावच्छेदकतया लाघवादभावत्वमप्यखण्डोपाधिराद्रियतामिति वाच्यम्, यतस्तत्तत्कारणतावच्छेदकेष्वभावत्वप्रवेश एव नास्तीत्यभावत्वेऽखण्डोपाधित्वसन्धानस्य वायसदन्तसूक्ष्माग्रतासन्धानसमत्वात्। एवं अभावत्वस्याखण्डोपाधित्वे समस्ताभावपदस्य योगार्थकताव्याघातापत्तेः। रूढिशक्तिकल्पनापत्तेश्च।

अथ के हि धर्म्मा भावानां विभाजकाः। इति चेत्,

द्रव्यत्वञ्च गुणत्वञ्च क्रियात्वं समवायता।
अखण्डोपाधिजातित्वं धर्म्मा भावविभाजकाः॥ १७॥

अयमाशयः। एते षड् धर्म्मा भावानां विभाजकाः। तत्राखण्डोपाधित्वं स्वरूपसम्बन्धेन शाब्दबोधीयनिरवच्छिन्नप्रकारत्वम्। जातित्वञ्च समवायसम्बन्धेन शाब्दबोधीयनिरवच्छिन्नप्रकारत्वम्। * न तु नित्यत्वे सत्यनेकसमवेतत्वं तत्, गौरवात् समवायगामित्वाच्च। समवायस्यासमवेतत्वे एकार्थसमवायसम्बन्धेन समवाये जातिमत्त्वमङ्गीकृत्य समवायः सन्नित्यादिव्यवहारप्रदर्शनं ग्रन्थकृज्जगदीशतर्कालङ्कारप्रभृतीनां विरुध्येत। न च तादृशसम्बन्धेन स्वरूपतो घटत्वादिभानमुपादाय जातिः समवायश्च घट इत्यपि व्यवहारः प्रमाणं स्यादिति वाच्यम्, जातिः सती समवायः सन्नितिव्यवहारस्य प्रामाण्यानुरोधेन सत्तारूपजातेरेव शुद्धसमवायसम्बन्धवत् तादृशपरम्परासम्बन्धेनापि शाब्दे स्वरूपतो भानाभ्युपगमात् न तु घटत्वादिजातेरपि, व्यवहारादेरेव पदार्थसाधकत्वात्। येन सम्बन्धेन कस्यचित् स्वरूपतो भानं तेन सम्बन्धेन सर्वेषामेव तथा इति न नियमः, तथा सति समवायसम्बन्धेन घटत्वादिजातेः स्वरूपतो भानदर्शनेन घटादेरपि तेन सम्बन्धेन स्वरूपतो भानस्वीकारप्रसङ्गात्।

अथ वा घटादिपदस्य शुद्धसमवायसम्बन्धेन घटत्वाद्यवच्छिन्ने शक्तिः स्वीकार्या न त्वेकार्थसमवायसम्बन्धेनापीति समवायो घट इत्यादिव्यवहारस्य न प्रामाण्यं घटाभेदस्य समवायादावसत्त्वात्। सत्पदस्य तु एकार्थसमवायेनापि सत्ताजात्यवच्छिन्ने आजानिकवृत्तिस्वीकारेण समवायः सन्नित्यादिव्यवहारः सूपपद्यते।

---

* समवायसम्बन्धावच्छिन्ननिरवच्छिन्नप्रकारतासम्बन्धेन शाब्दवत्त्वमिति यावत्। अत्र यत् 'तत्त्वसारविचार'कारेणोक्तं—"........शाब्दत्वं यदि शाब्दयामीत्यनुभवसिद्धो जातिविशेषस्तदा तत्रापि जातित्वं तथैव वाच्यम् इत्यात्माश्रय" इति। तन्न, यतस्तत्र शाब्दत्वस्य स्वरूपत एव भानं न तु जातित्वेन प्रवेशः। जगदीशतर्कालङ्कारैरपि सूक्तौ—"नानाधर्म्मिण्येकप्रकारकप्रमाप्रकारीभूतो यो धर्म्मः स सामान्यमित्यर्थः। प्रकारत्वञ्च समवायेन ग्राह्यमतोऽभावत्वादेरखण्डत्वेऽपि न तत्रातिव्याप्तिः।" इति जातिलक्षणमुक्तम्।

अथ के पुनरभावानां विभाजकाः। यद्बलादभावानां चातुर्विध्यं व्यवहर्त्तुं शक्यते इति चेत्,

विभाजकान्यभावानां ध्वंसता प्रागभावता।
अत्यन्ताभावभेदत्वं न द्वितीया क्वचिन्मते ॥ १८ ॥

अयमाशयः। ध्वंसत्वमखण्डोपाधिः भावनाशादिनिष्ठजन्यताया अवच्छेदकतया तत्सिद्धेरावश्यकत्वात् तृणारणिमण्यादिनिरूपितवह्न्या-दिनिष्ठजन्यताया अवच्छेदकतया तार्णत्वादिजातिसिद्धिवत्। न तु जन्यत्वे सत्यभावत्वं तत् तस्य गुरुतरपदार्थस्य तत्तत्कारणतावच्छेदक-त्वे गौरवात्। प्रागभावत्वमप्यखण्डोपाधिः। भूतव्यक्तेरापत्तेः स्व-स्वानधिकरणेषु कार्य्यापत्तेश्च वारणार्थं प्रागभावस्वीकर्त्तृमते तत्त-त्कार्य्यंप्रति तदीयप्रागभावत्वेन हेतुत्वकल्पनाया आवश्यकत्वेन लाघवात् तत्तत्कारणतावच्छेदकतया तत्सिद्धेरावश्यकत्वात्। भेदत्वमप्यखण्डोपाधिः, चाक्षुषादिकं प्रति गन्धादिभेदनिष्ठकार-णतावच्छेदकतया तत्सिद्धेः। न तु तादात्म्यसम्बन्धावच्छिन्नप्रति-योगिताकाभावत्वं तत्, प्रोक्तकारणतावच्छेदकगौरवात्, अभावीयप्रति-योगितायां वृत्त्यनियामकसम्बन्धावच्छिन्नत्वापाताच्च। शिरो-मणिमते प्रागभावो नास्त्येव अनधिकरणे कार्य्यापत्तिस्तु प्रकारा-न्तरेण तेन वारिता। तन्मते प्रागभावत्वव्यवहारस्त्वत्यन्ताभावविशेषेष्वेव तच्च तत्तत्कार्य्याधिकरणक्षणोत्पन्नानधिकरणकालवृत्तित्वविशिष्टतत्तत्-कार्य्यीयाभावत्वम्। अतः प्रागभावस्याभावान्तरतायां बलवत् प्रमाणं दुर्लभम्। एवञ्च प्रागभावत्वस्याभावविभाजकता न हि सम्भ-वेत। मिथो विरुद्धधर्म्माणामेव विभाजकत्वात्। अतस्तदवशिष्टध-र्म्माणामेव तन्मतेऽभावविभाजकत्वमुपगन्तव्यमिति।

अथ परिमाणं प्रति द्रव्यत्वेन कारणत्वं तद्वारावारणार्थञ्च परि-माणत्वेन प्रतिबन्धकत्वम् एवं एकत्वगुणं प्रति द्रव्यत्वेन कारणत्वं

तद्वारावारणाय च एकत्वत्वेन प्रतिबन्धकत्वम्। एवञ्च परमाणुगगनादिषु तद्वारावरहनिर्वाहाय तत्र नित्यमेव परिमाणमेकत्वञ्चागत्याऽङ्गीकार्य्यमिति तु न विचारसहम्, परिमाणमेकत्वञ्च प्रति परिमाणप्रागभावत्वेनैकत्वप्रागभावत्वेन च कारणताद्वयमेव कल्पनीयं न पुनरुक्तचतुष्टयम्। अद्रव्ये द्रव्ये च परिमाणादिजननोत्तरकाले परिमाणादिप्रागभावासत्त्वस्य सर्वसम्मततया द्रव्यभिन्ने परिमाणादेर्द्रव्ये च परिमाणादिधाराया सहजत एवोत्पादवारणसम्भवात्। न च भूतव्यक्तेरुत्पादसमये भाविव्यक्तेरुत्पादवारणार्थं व्यक्तिविशेषं प्रति कारणविशेषकल्पनमावश्यकं प्रागभावरूपकारणकल्पनया तद्वारणासम्भवात् भूतसमये भाविनां प्रागभावसत्त्वात् तादृशकारणकल्पनाबलेन स्वानधिकरणेष्वपि कार्य्यव्यक्तेर्नापत्तिः सम्भवेत् नितरां व्यर्थमेवातिरिक्तप्रागभावपदार्थकल्पनम्। इति दीधितिकारमते प्रागभावस्यासत्त्वेन कथं परिमाणादिप्रागभावे कारणत्वं सम्भवदुक्तिकमिति वाच्यम्, एकत्वं परिमाणञ्चान्तर्भाव्य प्रोक्तचतुष्टयकल्पनापेक्षया कारणताद्वयमात्रकल्पनालाघवानुरोधेन तत्कारणतया प्रागभावरूपधर्मिकल्पनाया आवश्यकत्वात्। एवञ्च प्रागभावखण्डनमुन्मत्तप्रलपितमेव। न ह्येकत्र तत्कल्पनायामनावश्यकत्वं प्रदर्श्याऽन्यत्र लाघवसत्त्वेऽपि तत्कल्पनां परिहातुमीष्टे। अत एव परमाणुगगनादिस्वीकर्तृमतेऽपि तत्र तत्र परमेश्वरे च परिमाणं गुणात्मकैकत्वञ्चाप्रामाणिकमेव सुतरां गुणात्मकद्वित्वादिकमपि। न च परमाण्वादिस्वीकर्तृमते द्व्यणुकादेः परिमाणोत्पादार्थं परमाण्वादिगतद्वित्वादिगुणस्वीकारावश्यकत्वमेव तादृशपरिमाणं प्रति तादृशद्वित्वादेः कारणत्वस्य सर्व्वसम्मतत्वादिति वाच्यम्, एवमपि वरं लाघवेन तत्र नित्यद्वित्वादेरेवोपगमात् न तु तत्र तत्र परिमाणैकत्वानामपि। एतेन "वाक्यात् संख्याविशेषाच्च साध्यो विश्वविदव्ययः।" इत्यनेन सर्गाद्यकालीनद्व्यणुकादिसमवेतपरिमाणानुगुणद्वित्वादिजनकापेक्षाबुद्धिधर्मितया परमेश्वरः साधित उदयनाचार्य्यैस्तच्चिन्तनीयम्। इति चेन्न, यतः प्रागभावास-

त्त्वेऽपि परिमाणत्वाद्यवच्छिन्नं प्रति द्रव्यत्वेन पृथक् कारणत्वं मयापि· न कल्पनीयं तद्व्यापकगुणत्वावच्छिन्नं प्रति द्रव्यत्वेन क्लृप्तकारणतयै-वाद्रव्ये गुणान्तर्गणितपरिमाणादेरुत्पादवारणसम्भवात्। परन्तु तद्धा-रावारणार्थमेव परिमाणत्वैकत्वत्वाभ्यां प्रतिबन्धकताद्वयं कल्पनीयम्। एवञ्च क्लृप्तपदार्थमन्तर्भाव्य कारणताद्वयकल्पनापेक्षया प्रागभावत्वरूपा-खण्डधर्म्मं प्रागभावांश्च कल्पयित्वा तत्र तत्र कारणताद्वयकल्पनमपि गौरवदोषकवलितमेव। एवं मन्मते प्रतियोगितासम्बन्धेन सामान्यतो नाशत्वावच्छिन्नं प्रति जन्यभावत्वेन एकमेव हेतुत्वं कार्य्यतावच्छे-दके प्रतियोगिविधयाऽभावाप्रवेशकृतलाघवञ्च। प्रागभावस्वीकर्तृमते च प्रागभावे व्यभिचारवारणाय भावनाशं प्रति जन्यभावत्वेन हेतुत्वं अभावनाशं प्रति च प्रागभावत्वेन हेतुत्वमिति गुरुशरीरकार्य्यकारणभाव-द्वयकृतं गौरवमपि दुरपह्नवमेव। एवञ्च परमाण्वादावपि परिमाणादि-धारावारणार्थं युज्यत एव नित्यपरिमाणादिमत्त्वस्वीकारः। न च सर्गाद्यकाले परमाण्वादावेकत्वसत्त्वेऽपि तदानीं जन्यापेक्षाबुद्धेरसत्त्वेन तत्कालावस्थायिनां तद्गतद्वित्वादीनां नित्यत्वमेवोचितम्। तेषां जन्यत्वमभ्युपेत्य तदुत्पादार्थं परमेश्वरस्यापेक्षाबुद्धिकल्पनं तु "प्रक्षा-लनाद्धि पङ्कस्य दूरादस्पर्शनं वर"मित्यादिन्यायेनायुक्तमेव। एवमी-श्वरस्यापेक्षाबुद्धिस्वीकारे परमाणुपर्य्याप्तद्वित्वादीनामनवस्थाप्रसङ्गोऽपि। इति वाच्यम्, यतो द्वित्वादिसंख्यामात्रस्यैव जन्यत्वस्वीकारेऽनतिप्रस-क्तद्वित्वत्वादिजातिमात्रेणैव एकत्वापेक्षाबुद्धिनिरूपितजन्यत्वं कल्पयितुं शक्यते। कतिपयद्वित्वानां नित्यत्वस्वीकारे तु एकत्वादिनिरूपित-जन्यतावच्छेदककुक्षौ जन्यत्वस्यापि निवेशावश्यकत्वं नित्यद्वित्वसाधा-रणद्वित्वत्वजातेस्तज्जन्यतातिप्रसक्तत्वात्। एवञ्च द्वित्वत्रित्वादिनिष्ठ-बहुजन्यतानामतिगुरुशरीरजन्यत्वेऽवच्छेदकत्वकल्पनापेक्षया लघीयस्या केवलद्वित्वत्वादिजात्याऽनेकपर्य्याप्तसकलसंख्यानां जन्यत्वमङ्गीकृत्या-वच्छेदः कल्पयितुं युक्तः। प्रोक्तानवस्था तु प्रामाणिकत्वात् न खलु

दोषाय वीजाङ्कुरवत्। न च कार्य्यतावच्छेदकलाघवानुरोधेन सर्व्वेषामेव द्वित्वादीनां जन्यत्वस्वीकारे सर्व्वेषां परिमाणानामपि तुल्ययुक्त्या जन्यत्वव्यवस्था स्यादिति वाच्यम्, यत एकत्वस्य परिमाणस्य च धारा न कैरप्यनुमता, अन्यथा घटादेरपि तद्धारास्वीकारः क्रमपचयमावहेत् यद्वारणार्थं कारणकल्पनं भवताप्याद्रृतम्। एवञ्च तादृशधाराया एवाप्रामाणिकत्वे क्व पुनस्तदनवस्थावार्त्तापि। एवञ्च परिमाणैकत्वानामप्रामाणिकानवस्थाप्रसङ्गवारणार्थं परमाण्वादीनां नित्यपरिमाणैकत्वकल्पनं साधीयः। साधीयांश्च गुरुतरस्यापि जन्यत्वस्य परिमाणादिगतजन्यतावच्छेदके स्वानतिप्रसक्ततानिर्व्वाहायाऽगत्या तदवच्छेदकघटकतया निवेशोऽपि।

वस्तुतस्तु सर्व्वज्ञे भगवत्यपेक्षाबुद्धिस्वीकारावश्यकत्वम्। अन्यथा "यः सर्व्वज्ञः सर्व्वविदि" त्यादिश्रुतिरूपप्रमाणेन प्रतिपादिताया भगवतः सर्व्वज्ञताया व्याघातापत्तिः। न च तज्ज्ञानेऽयमेक इत्यादिरूपविशिष्टविषयकत्वरूपापेक्षाबुद्धित्वं न स्वीक्रियते परन्तु तत्र सर्व्वविषयकत्वनिर्व्वाहाय यथा कथञ्चिद्रूपेण सर्व्वविषयकत्वमेव स्वीक्रियते लाक्षणिकपदजन्यलक्ष्यार्थविषयकशाब्दत्वविशिष्टविषयिताशून्यायामपि भगवदिच्छायां सर्व्वविषयकत्ववत्। एवञ्च तदीयापेक्षाबुद्धेरसत्त्वेन सर्गाद्यकालीनद्वित्वादेर्नित्यत्वमव्याहतमेव तृणारणिमणिन्यायेन जन्यद्वित्वादिमात्रगतं वैजात्यम् अपेक्षाबुद्धिजन्यतावच्छेदकतया कल्पनीयम्। एवञ्च तज्जन्यतावच्छेदके जन्यत्वं न निवेशनीयं व्यर्थत्वात्। तथा च सर्गाद्यकालीनद्वित्वादीनां नित्यत्वसम्भवेन तेषां नानन्तता न वाऽनवस्थाप्रसङ्गः इति चेन्न, "सर्व्वं खल्विदं ब्रह्म" "सर्व्वं विष्णुमयं जगदि-" त्यादिरूपस्य परमेश्वरकृतव्यवहारस्य व्यवहर्त्तव्यज्ञानमूलकस्य तदीयापेक्षाबुद्धिविषयत्वज्ञानमन्तरेण कथमपि निर्व्वाहासम्भवात्। यतो नित्यजन्यभाविभूतसकलपदार्थपरतद्वाक्यस्थसर्व्वपदेन नित्यवहुत्वगुणस्य प्रतिपादनासम्भवात् अपेक्षाबुद्धिविषयत्वरूपं सर्व्वत्वमेव प्रतिपादितम्।

न च योगिनां भाविभूतसृष्टिसमयोत्पन्नापेक्षाबुद्धिविषयत्वरूप-व्यवहर्त्तव्यस्य सर्व्वज्ञे भगवति ज्ञानसम्भवेन तेन व्यवहर्त्तव्यज्ञानेन सर्गाद्यसमयेऽपि तदीयव्यवहारोपपत्तिः सम्भवति इति वाच्यम्, परकीयापेक्षाबुद्धिजन्यव्यासज्यवृत्तिगुणप्रत्यक्षस्येव तादृशापेक्षाबुद्धिविषयत्वज्ञानाधीनापेक्षाबुद्धिविषयत्वरूपबहुत्वादिव्यवहारस्याप्यदृष्टचरत्वेन तत्तत्पुरुषीयबहुत्वादिव्यवहारं प्रति तदीयापेक्षाबुद्धिविषयत्वस्य ज्ञानमनुकूलमित्येवोपगन्तव्यतया "सर्व्वं खल्विदं ब्रह्मे"त्यादिश्रुतिरूपव्यवहारानुरोधेन परमेश्वरेऽपि परमाण्वादिसकलपदार्थान्तर्भावेणापि भगवदपेक्षाबुद्धिस्वीकारावश्यकत्वम्। यदि च 'मम सुवर्णशतमस्ति' इति कस्यचित् वचनं श्रुत्वा देवदत्तस्य सुवर्णशतं विद्यते इति व्यवहारस्यान्यपुरुषप्रयुक्तत्वदर्शनेन पुरुषविशेषनियन्त्रितोक्तकार्य्यकारणभावस्य न प्रमाणसिद्धत्वं यत्र तु परकीयापेक्षाबुद्धिविषयत्वज्ञानमसर्व्वज्ञस्य न सम्भवति तत्रैव स्वकीयापेक्षाबुद्धिः सुतरामेवोपयुज्यते इत्येव दृष्टचरमित्युच्यते, तावतापि प्रलयदशायामपि पदार्थाः सर्व्वत्ववन्त इति व्यवहारबलेन तत्कालेऽप्यपेक्षाबुद्धिस्वीकारावश्यकत्वात्। न च भाविभूतयोगिज्ञानस्य विषयतामादाय तद्दशायामपि तत्र सर्व्वत्वं निराबाधमेव विषयताया ज्ञानसमानकालीनत्वनियमे प्रमाणाभावादिति वाच्यम्, विषयताया ज्ञानसमानकालीनत्वस्यैवावश्यमभ्युपेतव्यत्वात्। अत एव तत्पुरुषेण यदा कदाचिदेतद्घटो दृष्ट एतद्घटस्तत्पुरुषदृष्टो वा न त्वन्धतादशायाम् इत्यादिरूपप्रामाणिकव्यवहारतस्तदीयचाक्षुषविषयत्वसामान्याभाववत्त्वमन्धतादशावच्छेदेन प्रत्याय्यते न तु तत्कालीनायास्तदीयदृष्टेरभाववत्त्वं तदा तस्या असम्भवात् इति सुसङ्गतम्।

न च विषयताया ज्ञानसमानकालीनत्वानियमेऽपि तत्पुरुषीयदर्शननिरूपितत्वविशिष्टविषयतायाः सर्व्वमत एवाव्याप्यवृत्तितया तादृशविशिष्टाभाव एवान्धतादशायां प्रतीयतां पूर्व्वक्षणविशिष्टगगनाभावस्याभावः क्षणान्तरावच्छेदेनेवेति वाच्यम्, विषयताया तत्तज्ज्ञाननिरूपितत्ववि-

शिष्ठनिरूपितं केवलतत्तद्विषयतानिरूपितञ्च द्विविधमधिकरणत्वमकल्पयित्वा लाघवेन विषयताया ज्ञानसमानकालीनत्वस्यैवौचित्यात्। एवञ्च प्रलयकालीनपदार्थे तद्दशायां वहुत्वं नास्ति तत्कालीनपदार्थास्तद्दशायां न वहव इत्यादिव्यवहारस्य संख्यामात्रस्यैवैकत्ववहुत्वान्यतरत्वनियमेन ते पदार्था एक एव इति व्यवहारस्य चार्थवशसम्पन्नस्य प्रामाण्यापत्तिर्वज्रलेपवत् प्रतिभाति। अतस्तदापत्तिवारणार्थं सर्व्वपदार्थान्तर्भावेण परमेश्वरस्यापेक्षावुद्धिस्वीकारावश्यकतया तादृशापेक्षावुद्ध्यादिघटितसामग्रीवलेन सर्गाद्यकाले परमाण्वादौ द्वित्वाद्युत्पादस्य दुर्व्वारतया तेषां नित्यत्वव्यवस्थापनं गीर्व्वाणगुरूणामप्यशक्यम्।

अथ तादृशाधिकरणताद्वयकल्पनाभयेन परमेश्वरापेक्षावुद्धिं कल्पयित्वा सर्गादौ परमाणुगतसंख्यानां नित्यत्वखण्डनपटुत्वं प्रकटीकृतम्, एतदतीवरहस्यम्, केवलं विषयताधिकरणताद्वयकल्पनात एव विभेषि परमाणुगतासंख्यसंख्यानामनन्ततानवस्थाकल्पनाकृतगौरवभयानि किं नोपतिष्ठन्ते। इति चेदनन्तानवस्थितविषयाणामनन्तानवस्थितज्ञानव्यक्तिनिरूपितविषयत्वाधिकरणत्वेषु प्रत्येकं द्वैविध्यकल्पनापेक्षयाऽनवस्थितस्यापि तादृशद्वित्वादेः कल्पनाया लघीयस्त्वात्। परमार्थस्तु भगवतोऽपेक्षावुद्धिस्वीकारेऽपि गुणादिगतापेक्षावुद्धौ एकत्वरूपगुणाविषयकत्ववत् परमाण्वाद्यन्तर्भावेणापि भगवदपेक्षावुद्धौ एकत्वरूपगुणविषयकत्वस्वीकारमन्तरेणापि तस्या अपेक्षात्वं निर्वहति तत्र तादृशगुणविषयकत्वस्वीकारे सर्गाद्यकालीनद्वित्वादीनामनवस्थास्वीकारनिवन्धनो महानेव दोषः। अतः प्राचीननैयायिकमते नित्यमात्रवृत्तिद्वित्वादीनां नित्यत्वकल्पनं विना न निस्तारः। न च पर्य्याप्तसंख्यामात्रस्यैव जन्यत्वमिति प्राचीनसिद्धान्तविरोध इति वाच्यम्, भगवदक्षपादकणादादिग्रन्थे तादृशसिद्धान्तस्य सुव्यक्तमदृष्टचरत्वात्।

न च "वाक्यात् संख्याविशेषाच्चे"त्युदयनाचार्य्यलिखनेन

तादृशसिद्धान्तः सुव्यक्तमवगम्यत एवेति वाच्यम्, त्रसरेणुपरिमाणानुगुणद्व्यणुकसंख्यायाः कथमपि नित्यत्वासम्भवेन तत्संख्यापरतयैव तादृशकारिकाया व्याख्येयत्वात्। क्रियाहेतुतया परिमाणविशेषस्य परमाणुघटपटादिसाधारणस्य सिद्धेरावश्यकतया घटादौ परिमाणधारावारणार्थं क्रियारहिते तु विश्वव्यापिगगनपरमेश्वरादौ तदुत्पादवारणार्थञ्च परिमाणविशेषप्रतिबन्धकतया सर्व्वेष्वेव द्रव्येषु परिमाणसिद्धिरावश्यकी। एवञ्च एकत्वधारादिवारणार्थं एकत्वस्य प्रतिबन्धकत्वं न कल्प्यते, तथा सति परमाणुपरमेश्वरादौ सर्व्वत्र तत्कल्पननिबन्धनं गौरवं स्यात्। परन्तु परमाण्वादौ क्रियाहेतुतया उभयवादिसिद्धस्य विश्वव्यापिगगनादिमात्रे कल्प्यस्य च परिमाणस्यैव एकत्वधारादिवारणार्थमेकत्वं प्रत्यपि प्रतिबन्धकत्वं स्वीकर्त्तुमुचितम्। एवञ्च तत्र तत्र नित्यमपि गुणात्मकैकत्वमप्रामाणिकं किं पुनस्तन्मूलकतया द्वित्वादीनां जन्यत्वसिद्धिचिन्तनेन तत्र तत्रैकत्वव्यवहारस्तु गुणादावेकत्वव्यवहारवदुपपादनीयः। गुणादिसाधारणसंख्यारूपगुणस्वीकर्त्तृमते च गुणातिरिक्तैकत्वानामलीकतया भगवदपेक्षाबुद्धेरपि सकलपदार्थान्तर्भावेण एकत्वगुणमात्रविषयकत्वस्यावश्यकत्वम्। अतस्तन्मत एव प्राचीनस्वीकृतपरमाणुगगनादीनां द्वित्वादिगुणस्याप्युत्पादो दुरपवादः। सर्गादौ त्रसरेणुपरिमाणानुगुणद्व्यणुकानां त्रित्वगुणोत्पादार्थं सर्व्वमत एव परमेश्वरापेक्षाबुद्धेः स्वीकर्त्तव्यत्वेन तस्या असंख्यैकत्वविषयकत्वेऽपि द्वित्वत्रित्वाद्युत्पादकत्वं निर्व्विवादमेव। एतेन द्वित्वाद्युत्पादे एकत्वद्वयाद्यविषयकस्य तद्द्वयादिविषयकस्यापेक्षाज्ञानस्यैव द्वित्वाद्युत्पादकत्वमिति निरस्तम्। त्रित्वाद्युत्पादकाले नियमतो द्वित्वाद्युत्पत्तिरपि स्वीक्रियते। अन्यथा भगवदपेक्षाबुद्धेर्द्वित्वाद्युत्पादकत्वभङ्गप्रसङ्गः स्यादिति। इत्यास्तां विस्तरः।

अथ कथमखण्डोपाधीनां पदार्थान्तरता कथं वा पूर्व्वाचार्य्यसम्म-

तानां परमाणुगतविशेषाणां परित्यागः। इति चेत्,—

दृष्ट्वा प्रकारतात्वाद्यमखण्डोपाधिरादृतः।
विशेषा निद्रिताः सन्तु सार्द्धं व्योमाब्जसौरभैः ॥१६॥

अयमाशयः। घटपटादिकं गगनादितो भिन्नमिति प्रतीत्या भेदे गगननिष्ठप्रतियोगिताकत्वमेव, शब्दवत्त्वेन गगनं जानातीत्यादिप्रतीत्या तन्निष्ठविशेष्यताकत्वमेव, गगने शब्दा ज्ञायन्ते इत्यादिप्रतीत्या च गगननिष्ठप्रकारताकत्वमेवावगाह्यते न तु तद्वैपरीत्यमपि, प्रकारतात्वादेरखण्डपदार्थान्तरत्वास्वीकारे प्रकारत्वादेराश्रयस्वरूपतया तेषामवैलक्षण्यात् उक्तनियमो नोपपद्यते। एवं विशिष्टबुद्धिबाधनिश्चययोः प्रतिबध्यप्रतिबन्धकभावानुरोधेनापि विशेष्यतात्वप्रकारतात्वादीनां विलक्षणपदार्थान्तरताया आवश्यकत्वम्। त एव च पदार्था अखण्डोपाधित्वेन गीयन्ते। परमाणुधर्म्मा हि विशेषास्तु न सन्त्येव। यतः परमाण्वादीनामलीकता प्रागृव्यवस्थिता किं पुनस्तद्गतविशेषरूपपदार्थान्तरचिन्तनेन व्योमकमलपरिमलचिन्तनवत्।

अथ मनः किमन्तर्भूतम्, इति चेत्,—

भूर्वारि तेजः पवनः परमात्मा तथा मनः।
द्रव्याणि षड्विधान्येव जीवादिर्नेतरस्ततः ॥२०॥

अयमाशयः। जीवात्माकाशकालदिशां यथासम्भवं क्लृप्तपदार्थान्तर्भावः प्रागृदर्शितः। अतो न विभागन्यूनत्वम्। अथ प्रमाणाधीना सर्व्वेषां पदार्थानां व्यवस्थितिः। अतः किं प्रमाणम्, इति चेत्,—

मानमिन्द्रियमध्यक्षेऽनुमानमनुमां प्रति।
शाब्दबोधे तु शब्दाख्यमतो मानं त्रिधा मतम् ॥२१॥

अयमाशयश्चाक्षुषप्रत्यक्षे नयनरूपेन्द्रियस्य त्वाचप्रत्यक्षे त्वगिन्द्रियस्य रासनप्रत्यक्षे रसनेन्द्रियस्य घ्राणजप्रत्यक्षे घ्राणेन्द्रि-

यस्य श्रावणप्रत्यक्षे श्रवणेन्द्रियस्य मानसप्रत्यक्षे मनोरूपेन्द्रियस्य स्वव्यापारद्वारा कारणतया तेषां सर्व्वेषामेवेन्द्रियाणां प्रत्यक्षमितिकरणत्वरूपं प्रामाण्यं निराबाधम् ।

अनुमितौ परामर्शद्वारा व्याप्तिज्ञानस्य कारणत्वात् तस्यानुमितिकरणत्वरूपं प्रामाण्यं निष्प्रत्यूहम् । शाब्दोत्पादे तु पदार्थोपस्थितिद्वारा श्रुतशब्दानां हेतुत्वात् तेषां शाब्दबोधकरणत्वरूपं प्रामाण्यमक्षतम् । इति प्रमाणानां त्रैविध्यमेवेति सर्व्वानुमतम् ।

अथ पीनो देवदत्तो दिवा न भुङ्क्ते इति दिवसे भोजनाभावरूपविशेषबाधनिश्चयदशायां भोजनं विना पीनत्वमनुपपन्नमित्यनुपपत्तिप्रतिसन्धाने सति देवदत्तस्य रात्रिभोजनावधारणरूपमर्थापत्तेः फलमर्थापत्तिरूपप्रमाणान्तरादेव जायते । अत एव पीनो देवदत्तो दिवा न भुङ्क्ते अर्थाद्रात्रावित्यादिवाक्यं प्रयुञ्जते वृद्धाः । एवञ्च तस्याः प्रमाणान्तराप्रदर्शनेन विभागन्यूनत्वं स्यात् ।

अर्थापत्तेः फले यस्मादनुमात्वमवस्थितम् ।
अतोऽसावक्षपादेन मानत्वेन न सूत्रिता ॥२२॥

पर्वतो वह्निमान् धूमादित्यादिस्थलान्तरेषु क्लृप्तस्यानुमितित्वस्यैव कल्पनमुचितं लाघवात् न तु तत्रानुमितिवैजात्यस्य गौरवात् । एवञ्चानुमानत्वेनैवार्थापत्तेः प्रमाणत्वनिर्व्वाहेण तदप्रदर्शननिबन्धनं न विभागन्यूनत्वमिति । न चानुमानान्तर्गतार्थापत्तिः किं वार्थापत्त्यन्तर्गतमनुमानमित्यत्र विनिगमनाविरह इति वाच्यम्, यतोऽर्थापत्तेः फलगतार्थापत्तित्वमितरबाधसहकृतेन केवलव्यतिरेकव्याप्तिज्ञानेन प्रयुक्तम् । अनुमितित्वन्तु इतरबाधस्य सत्त्वेऽप्यसत्त्वेऽपि वान्वयव्यतिरेकव्याप्तिज्ञानप्रयु-

अयमाशयः । भोजनं विना पीनत्वमनुपपन्नमित्यादिवाक्यतो यत्र यत्र भोजनाभावो वर्त्तते तत्र तत्र पीनत्वाभाव इत्येवार्थः प्रतीयते । स चार्थः पीनत्वरूपहेतौ भोजनरूपसाध्यव्यतिरेकव्याप्तिस्वरूपः । एवञ्च तादृशावधारणस्थले नियमतो व्याप्तिज्ञानादिसत्त्वेन तादृशावधारणे

क्तम् । एवञ्च प्रत्यक्षविशेषे सामग्रीविशेषप्रयुक्तसाक्षात्कारत्ववत् अनुमितिविशेषे उक्तसामग्रीविशेषप्रयुक्तार्थापत्तित्वस्यैवौचित्यात् । एवं श्रुत्यादावनुमितिबोधक'मनन'शब्दस्य स्मृत्यादौ तु अनुमानशब्दस्य च दर्शनेनानुमानत्वानुमितित्वयोरपलापः कर्त्तुं न हि शक्यते । श्रुतिर्यथा "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति ( १ )। स्मृतिर्यथा"—आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तम" मिति ( २ )। एतेन शाब्दोऽप्यनुमित्यन्तर्भूत इति केषाञ्चिन्मतं तदपि निरस्तम्, उक्तमहर्षिवाक्ये त्रिधेति धाप्रत्ययस्य दृष्टत्वात्, तत्प्रत्ययस्य मिथोविरुद्धधर्म्मबोधकत्वव्युत्पत्तेः, शाब्दत्वस्यानुमितित्वव्याप्यत्वस्वीकारे तत्प्रयोक्तुर्भगवन्महर्षेरव्युत्पन्नत्वस्वीकारः प्रसज्येत । न चार्थापयामि (३) न त्वनुमिनोमीत्यनुव्यवसायबलेनार्थापत्तेः फलमनुमितिभिन्नत्वेन स्पष्टमेव प्रतीयते इति वाच्यम् ,यतस्तादृशानुव्यवसायस्तस्याः प्रमाणान्तरतास्वीकर्त्तर्य्येव जायते न तु सर्व्वेषु व्युत्पन्नपुरुषेष्वपि इत्येवोपगन्तव्यम् । सूत्रकारिणि भगवदक्षपादे तथाऽनुव्यवसायानुत्पादस्य भवतापि स्वीकारात् ।

अथ ग्रामीणस्य प्रथमतो गवयादिग्रहे गोसादृश्यं गवयत्वजातिश्च चक्षुषा गृह्यते तदनन्तरं गोसदृशो गवयपदवाच्य इति यदा कदाचित् श्रुतवृद्धवाक्यार्थस्य स्मरणं तदनन्तरञ्च गवयत्वजातौ लाघवज्ञानसहकारेण उक्तप्रत्यक्षस्मरणाभ्यां गवयत्वजात्यवच्छिन्नगवयपदवाच्यत्व-

---

( १ ) वृ० २।४।६।

( २ ) "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितं कार्य्य" मित्यादि मानवस्मृतिरपि (१२।१०५) द्रष्टव्या ।

( ३ ) "अर्थापत्तिविषयकसाक्षात्कारस्यार्थापयामीत्याकारकताप्रतिपादनेन व्याकरणशास्त्रेऽपि विलक्षणपाण्डित्यं प्रकाशितमेतद्ग्रन्थकर्त्रा"—इति 'तत्त्वसारविचार'कारस्याकाण्डताण्डवमतीव हास्यास्पदम्, वैयाकरणचूडामणिना कौण्डभट्टेन "पदार्थदीपिकायां" 'अर्थापयामीत्यनुभवसिद्धजातिविशेषवत्यर्थापत्तिरिति स्वहस्तितत्वात् ।

ग्रह उत्पाद्यते स चोपमानात्मकं प्रत्यक्षादिज्ञानत्रयाद् भिन्नमेव ज्ञानान्तरम्। एवञ्च तत्करणतयोपमानस्य प्रमाणान्तरत्वमावश्यकमेव। अतस्तदनुक्त्या विभागन्यूनता। न च गोसदृशो गवयपदवाच्य इतिवाक्यार्थस्य पूर्वस्मिन् काले शाब्दबोधेनैव गवयत्वावच्छिन्नगवयपदवाच्यताया विषयीकरणं भूतं तत्पदार्थतावच्छेदकावच्छिन्नतत्पदजन्यबोध्यत्वीयभगवत्सङ्केतविषयतायास्तत्पदवाच्यतास्वरूपतया गदाधरभट्टाचार्य्यप्रदर्शितत्वात्। एवञ्च उक्तशाब्दबोधेनैव चरितार्थतया कथमुपमानात्मकं ज्ञानान्तरमङ्गीकर्त्तव्यमिति वाच्यम्, उक्तशाब्दबोधदशायां गवयत्वादिजातेः कथञ्चिदप्यनुपस्थित्या गवयत्वावच्छिन्नस्य तादृशसङ्केतधर्म्मत्वेऽपि तादृशशाब्दबोधे तद्भानस्य कथमप्यसम्भवेन सुतरां तदंशं परित्यज्य पूर्व्वं शाब्दबोधजननावश्यकत्वात्। यो यो धर्मो यत्र धर्मिणि वर्तते तद्धर्मिणः शाब्दादिज्ञाने जायमाने तत्र तद्गतसकलधर्म्मभानं न हीति नियमः। इति चेन्न,—

उपमाबोधकं मानं श्रुत्यादिषु न दृश्यते।
अतोऽप्यस्यास्तु करणे मन्यतामनुमानता ॥२३॥

अयमाशयः। गोसादृश्यावच्छेदेन गवयपदवाच्यताग्रहतात्पर्य्येणैव वृद्धैरतिदेशवाक्यप्रयुक्तेरावश्यकत्वं तत्सामानाधिकरण्येन बोधतात्पर्य्यात्तत्प्रयोगे कस्मिंश्चिदेकस्मिन्नेव समये केन वृद्धेन गोसदृशो गवयपदवाच्यः केनचिच्च तत्सदृशो न तत्पदवाच्य इतिवाक्यम् अथ वा एकेनैव वाक्यद्वयं प्रयुक्तं तत्श्रवणेन ग्रामीणस्य तद्द्विविधविषयकमेव समूहालम्बनशाब्दज्ञानं जातं तादृशबोधमूलकसमूहालम्बनस्मरणोदये धर्म्मविशेषावच्छिन्नवाच्यताग्रहस्य सर्व्वाननुभूतस्य जननमापद्येत। एवञ्च तत्सादृश्यावच्छेदेन तत्पदवाच्यताया नियमतः शाब्दस्यावश्यकत्वे तद्बोधानन्तरं तत्सादृश्ये तद्वाच्यताया मानसग्रह औचित्येन जनितः। तादृशमानसग्रहमूलकसंस्कारबलादपि गवये गोसादृश्यप्रत्यक्षरूपोद्बोधकसहकारेण तादृशव्याप्यस्मरणं धूमदर्शनरूपोद्बोधके समुपस्थिते

सति वह्निव्याप्यधूमस्मरणवत् । तदनन्तरं प्रत्यक्षतो निश्चीयमाने गवयत्वजात्यवच्छिन्ने तादृशव्याप्यवत्ताया गवयरूपपक्षे प्रात्यक्षिकपरामर्शः । वाच्यत्वमवश्यं किञ्चिद्धर्म्मावच्छिन्नं घटादिपदवाच्यत्ववत् गवयत्वजातौ तदवच्छेदकत्वे लाघवमिति प्रतिसन्धानञ्च उपमाप्राक्कालेऽवश्यमपेक्षणीयम् । एवं गवयादिपदवाच्यत्वे धर्म्मावच्छिन्नत्वसिद्धयर्थमपि गवयपदार्थः किञ्चिद्धर्म्मावच्छिन्नवाच्यतावान् शक्तिभ्रमाजन्यलक्षणाग्रहाजन्यशाब्दबोधविषयत्वात् घटादिपदार्थवदित्यनुमानमपि। एवञ्च गवयत्वावच्छिन्नगवयपदवाच्यत्वग्रहार्थमुक्तद्विविधपरामर्शयोरेव जागरूकत्वेन प्रोक्तलाघवादिज्ञानसहकृतपरामर्शात् गवयत्वजात्यवच्छिन्नगवयपदवाच्यताया अनुमितेरेव सम्भवेन व्यर्थमुपमारूपज्ञानान्तरकल्पनम् ।

अथ वा उत्पत्तिकालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यादिसामान्यानुमानेन गन्धरूपविधेयांशे उत्पत्तिकालावच्छिन्नत्वभानवत् प्रत्यक्षगृहीतगवयत्वजातिविशिष्टे गवयपदवाच्यताव्याप्यगोसादृश्यव्याप्यवत्तारूपसामान्यपरामर्शेनापि लाघवादिप्रतिसन्धानं विनापि तादृशवाच्यतारूपसाध्यांशे गवयत्वजात्यवच्छिन्नत्वस्य सहजत एव भानं निराबाधम्, असति बाधके उद्देश्यतावच्छेदकावच्छिन्नत्वस्य विधेयांशे भाननियमात्। एतेन लाघवादिज्ञानसत्त्वेऽपि सामान्यपरामर्शाद्विशेषधर्म्मावच्छिन्नानुमितिर्नवीनानामसम्मता अतो वाच्यतायां गवयत्वरूपविशेषधर्मावच्छिन्नत्वसिद्धयर्थं तन्मते उपमानादर इति गदाधरभट्टाचार्य्योक्तं चिन्तनीयम् ।

अपि च लाघवेतरबाधादिप्रतिसन्धाने सामान्यपरामर्शादपि विशेषधर्म्मावच्छिन्नत्वसिद्धिरपि सर्व्वसम्मता । अन्यथा क्षितिः सकर्त्तृका कार्य्यत्वादिति सामान्यानुमानेन इतरबाधबलादीश्वरो न सिध्येत्, गन्धादिसमवायिकारणतावच्छेदकतया पृथिवीत्वादिजातिश्च । अत एव "आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य"इतिश्रुत्यापि

प्रत्यक्षशाब्दानुमितिस्मृत्यात्मकं चतुर्विधमेव ज्ञानं प्रतिपादितं न तु केनापि सर्व्वज्ञवाक्येन तदन्यत् ज्ञानमपि ।

अथानुमितौ व्याप्तिज्ञानं प्रमाणम् इति यदुक्तं तन्न सम्भवति, व्याप्तिपदार्थस्य दुर्निरूप्यत्वात् । न च स्वप्रतियोगिव्यधिकरणानां हेतुसमानाधिकरणानाम् अथ वा स्वप्रतियोगिमत्ताबुद्धेर्विषयविधया प्रतिबन्धकतावच्छेदकसम्बन्धेन हेतुसमानाधिकरणानामभावानां प्रतियोगितानवच्छेदको यो धर्म्मस्तद्धर्म्मावच्छिन्नसामानाधिकरण्यं हेतौ साध्यस्य व्याप्तिरिति वाच्यम्, तादृशव्याप्तेः स्वत्वघटिततया जन्मसहस्रेणापि ज्ञातुमशक्यत्वात् । परम्परासम्बन्धेन कथञ्चिदनुगमय्य तादृशव्याप्तिग्रहसम्भवेऽपि तादृशपरम्परायाः संसर्गत्वे प्रमाणस्य दुर्लभत्वात् । न चानुमित्यन्यथाऽनुपपत्त्या अनुमितिकरणतावच्छेदकघटकतया तादृशपरम्परायाः संसर्गत्वं कल्पनीयमिति वाच्यम्, अनुमितेरेव कल्पनापदार्थतया तादृशपरम्परायाः संसर्गत्वकल्पनार्थमपि तत्कारणतावच्छेदकतयापि परम्परायाः संसर्गत्वकल्पनावश्यकत्वम् एवं रीत्या कल्पनायामनवस्थापर्य्यवसानात् । उक्तव्याप्तेः कथञ्चिदनुगमसम्भवेऽपि वह्नित्वत्वाद्यनुपस्थितिदशायां स्वरूपतो वह्नित्वाद्यवच्छिन्नविधेयताकानुमितेरपलापप्रसङ्गात् व्यभिचारज्ञानाविरोधिव्याप्तिज्ञानस्यानुमिताबहेतुत्वात् । न च स्वरूपतो वह्नित्वाद्यवच्छिन्नविधेयताकानुमितिं प्रत्यपि वह्नित्वत्वाद्यवच्छिन्ने व्यापकतावच्छेदकत्वज्ञान एवानुकूल्यमगत्या स्वीकार्य्यम् । एवञ्च तदवच्छिन्ने व्यापकत्वज्ञानस्यानुमितिकारणत्वे व्यवस्थापिते तदज्ञानदशायामनुमितिर्नेष्यत एव । अन्यथा व्यापकत्वाग्रहदशायामप्यनुमितिं सम्भाव्य अनुयोगः स्यादिति वाच्यम्, वह्नित्वत्वावच्छिन्ने व्यापकतावच्छेदकत्वज्ञानात् पक्षतासत्त्वे नियमतो वह्नित्ववत्त्वान् वह्निमांश्चेति द्विविधाकारकानुमित्युत्पादस्य तावताऽप्यवारणात् ।

न च इतरत्वप्रतियोगितावच्छेदकतया यत् वह्नित्वादेः स्वरूपतो

यादृशज्ञानं अर्थाद्वह्नीतरावृत्तिर्हेतुसमानाधिकरणाभावप्रतियोगितानव-च्छेदक इत्यादिरूपं जायते तत्र स्थले तादृशज्ञानात् वह्निमानित्याका-कारिका स्वरूपतो वह्नित्वप्रकारेणैवानुमितिरङ्गीक्रियते । यत्र तु इतरत्वप्रतियोगितावच्छेदकतया वह्नित्वत्वेन वह्नित्वादेर्ज्ञानम् अर्थात् वह्नित्ववदितरावृत्तिहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकमित्या-कारकं भवेत्, तादृशज्ञानात् वह्नित्ववत्त्वानित्याकारिका वह्नित्वत्वरूपेण वह्नित्वप्रकारिकैवेति नोक्तद्विविधप्रकारकानुमितेर्नियमतः प्रसङ्ग इति वाच्यम्, तथा सति सदितरावृत्तित्वस्याप्रसिद्धत्वेन स्वरूपतः सत्ता-वच्छिन्नविधेयकानुमितेरधिकरणमितिप्रतीतिसाक्षिकाधिकरणत्वस्याख-ण्डोपाधित्वमते सकलपदार्थसाधारणाधिकरणत्वनिष्ठस्वरूपतोविधेय-तावच्छेदकताकानुमितेः भावाभावसाधारणस्य भेदत्वस्याभावत्वस्य वाऽखण्डोपाधित्वमते स्वरूपतस्तद्धर्म्मावच्छिन्नविधेयताकानुमितेश्चाप-लापापत्तेर्वज्रलेपत्वात् ।

न चावृत्तिगगनादौ भेदत्वमभावत्वञ्च नास्तीति तद्वदितरस्य नाप्रसिद्धिरिति वाच्यम्, "अभावविरहात्मत्वं वस्तुनः प्रतियो-गिते"ति स्वाभावाभावत्वरूपप्रतियोगिताङ्गीकृतामुदयनाचार्य्यादीनां भेदाद्यनुमितेरुच्छेदप्रसङ्गात् न हि स्वकपोलकल्पितोक्तकार्य्य-कारणभाववादिनः कस्यचिदनुमित्युत्पादेनैव जगदाप्यायनम् ।

न च स्वरूपतः सत्तादेर्विधेयतावच्छेदकत्वस्थले सत्समवेतं व्यापकतावच्छेदकमित्येव ज्ञानमुपयुज्यतामिति वाच्यम्, इच्छा-मात्रस्य तादृशकारणताकल्पकत्वे रूपवान् पृथिवीत्वात् इत्यादौ रसावृत्ति सत् यद् रूपवृत्ति गन्धावृत्ति सत् यद्रूपवृत्ति तत्त्वादिरूपा-णामनन्तधर्म्माणां रूपत्वमात्रे वर्त्तमानानां तदेकतरधर्म्मेण रूपेतरा-वृत्तित्वापेक्षया लघुतरेणावच्छिन्ने व्यापकतावच्छेदकत्वज्ञानेषु रूपाद्य-नुमितिं प्रति स्वतन्त्रपुरुषेच्छया कारणताकल्पनाया वज्रलेपत्वात् ।

अत एव केवलान्वयिग्रन्थे दीधितिकारेण स्वरूपतो ज्ञानत्वाद्यवच्छिन्न-विधेयताकानुमितेरसंग्रहभयेन व्यापकताज्ञानस्यानुमितिकारणत्वं खण्डितम् ।

न च साध्यतावच्छेदकावच्छिन्नाधिकरणत्वे व्यापकताव-च्छेदकत्वज्ञानमनुमितिहेतुरित्येवोपगन्तव्यं यत्र च तादृशाधिकरणत्व-शरीरे साध्यतावच्छेदकं स्वरूपतो निविष्टं तत्र स्वरूपतस्तदवच्छिन्न-विधेयताकानुमितिः फलमित्यादि यथायथमूहनीयमधिकरणत्वमख-ण्डोपाधि अव्याप्यवृत्तिमद्भेदोऽपि व्याप्यवृत्तिरेव अत्र तु व्यापकत्वं भेदघटितं व्यापकताघटकभेदे हेतुसामानाधिकरण्यं स्वरूपसम्बन्धेनैव वाच्यम्, न तु स्वस्वप्रतियोगिवैयधिकरण्यादिकमपि तत्र निवेशनी-यम् । न हि घटभिन्नभेदो घटत्वादतिरिच्यते इति नियमेन घटादिभिन्न-भेदस्य घटत्वादिस्वरूपत्वेऽपि घटभेदाधिकरणतावद्भेदश्च न घटत्वा-दिस्वरूपः परन्त्वतिरिक्त एव अतो व्यापकताया न दुर्ज्ञेयत्वावका-शोऽपीति वाच्यम्, घटभिन्नभेदादेरिव तद्भेदाधिकरणत्ववद्भेदादे-रपि लाघवेन घटत्वादिस्वरूपत्वोपगमात् । अत एव प्रसिद्धनिबन्ध-कारैर्जगदीशतर्कालङ्कारैरपि द्रव्यभिन्नत्वप्रकारकप्रमाविशेष्यत्वाभावस्य द्रव्यत्वानतिरिक्तत्वमङ्गीकृतम् । न च तद्भेदस्यातिरिक्तत्वस्वीकृन्मते तल्लक्षणं साधीय इति वाच्यम्, तद्भेदस्य द्रव्यत्वादिस्वरूपतावादिनाम् अव्याप्यवृत्तिमद्भेदस्याव्याप्यवृत्तित्ववादिनामधिकरणभेदेनाधिकरणता-या भिन्नत्ववादिनाञ्चोक्तव्याप्तिज्ञानस्य दुर्लभत्वेन तेषामनुमित्यपलापत्तेः । न हि केषाञ्चिदनुमितिं सम्पाद्य चरितार्थता । इति चेन्न—

सामानाधिकरण्येन साध्यासम्बन्धिवृत्तिता ।
अनुवृत्ततया याऽस्या विरहो व्याप्तिरुच्यते ॥ २४ ॥

अथ वा

साध्यसम्बन्धिवृत्त्यन्येष्वनुवृत्त्या च वृत्तिता ।
या स्यात्तस्यास्तु वैधुर्यं व्याप्तिरित्यभिधीयते ॥ २५ ॥

पर्य्यवसितास्तु साध्यतावच्छेदकसम्बन्धेन यत् स्वाधिकरणं स्वरूपसम्बन्धावच्छिन्नं तत्र यद् वृत्तित्वम् ईदृशसामानाधिकरण्यसम्बन्धेन यद् यत् साध्यतावच्छेदकावच्छिन्नसंम्बन्धि तदन्यनिरूपिता, अथ वा साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकधर्म्मावच्छिन्नसम्बन्धिनि स्वरूपसम्बन्धेन ये ये वर्त्तमानास्तदन्यनिरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावन्निरूपितं यत् स्वरूपसम्बन्धावच्छिन्नाधेयत्वं तादृशाधेयतासम्बन्धावच्छिन्नसम्बध्यता तस्याः सामान्याभावो व्याप्तिरिति।

वस्तुतस्तु या हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतावन्निरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नसम्बध्यता तादृशसम्बध्यताप्रतियोगिकस्वरूपसम्बन्धेन प्रोक्तसाध्यासम्बन्ध्यादिनिरूपितसम्बध्यत्वसामान्याभावो व्याप्तिः। उक्तसम्बध्यतायां पुनः सम्बन्धविशेषावच्छिन्नत्वं न देयम्। अतः केवलान्वयिसाध्यके नाव्याप्तिः। उभयत्वादिना विरुद्धद्वयदिसाध्यकस्थलेऽतिव्याप्तिवारणार्थं साध्यतावच्छेदकावच्छिन्नत्वनिवेशः।

ननु महानसीयत्वादिविशिष्टवह्न्याद्यवगाहितयैच वह्निमानित्यादिप्रतीत्युपपत्तिसम्भवेन शुद्धवह्नित्वाद्यवच्छिन्नाधिकरणतायां मानाभावादुक्तव्याप्तिघटकसम्बन्धिताकुक्षौ शुद्धसाध्यतावच्छेदकावच्छिन्नत्वं निवेशयितुं न हि शक्यते। एवञ्च शुद्धवह्नित्वादिना प्रतियोगितासम्बधेन वह्न्यादिसाध्यकमहानसीयवह्न्यभावत्वादिहेतावतिव्याप्तिरपरिहार्य्या महानसीयवह्न्यभावस्यापि महानसीयत्वसहितसाध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नसम्बन्धितया साध्यसम्बन्धिनिरूपितवृत्तिमदन्यत्वेन वह्निसामान्याभावभेदादीनामप्राप्तत्वात्।

इति चेन्न, सम्बन्धितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशसद्भावेन शुद्धसाध्यतावच्छेदकधर्म्मावच्छिन्नत्वस्य तत्र निवेशासम्भवेऽपि तत्रातिव्याप्तेरनवकाशात्। यतस्तत्र वह्नित्वमात्रावच्छि-

न्नत्वविशिष्टं प्रतियोगित्वमेव साध्यतावच्छेदकसम्बन्धो न तु शुद्धप्रतियोगितात्वेन तत्र संसर्गत्वमपि प्रतियोगितावच्छेदकतापर्य्याप्त्यधिकरणधर्म्ममात्रावच्छिन्नत्वविशिष्टप्रतियोगितात्वेनैव तत्र प्रतियोगिमत्तानियामकसंसर्गत्वस्य सर्वसम्मतत्वात् । अन्यथा विशेषाभावानां सामान्याभावसाम्यापत्तिरपरिहार्य्यैव । शुद्धसंयोगादिसम्बन्धेन महानसीयवह्निमत्सु शुद्धवह्नित्वाद्यवच्छिन्नवह्न्यदिमदभेदवत् । तथा च साध्यतावच्छेदकीभूततादृशप्रतियोगितासम्बन्धेन महानसीयवह्न्यभावादौ वह्निसम्बन्धित्वं नास्त्येव वह्निसामान्याभाव एव तादृशसम्बन्धेन वह्नेः सत्त्वात् । प्रतियोगितासम्बन्धेन हेतुतास्थले विशिष्टसत्तादेर्हेतुतास्थले चाव्याप्तिवारणार्थमपीदृश्येव गतिश्चिन्तनीया । तत्रापि वह्नित्वमात्रावच्छिन्नत्वविशिष्टप्रतियोगिताविशिष्टसत्तादिनिरूपितत्वविशिष्टसमवाययोरेव संसर्गत्वात् ।

न च सामानाधिकरण्यस्य संसर्गत्वे सत्येव उक्तव्याप्तिलक्षणं सम्भवेत् तस्य तदेव नास्ति प्रमाणाभावादिति वाच्यम्, सामानाधिकरण्यस्य संसर्गत्वं विना धर्म्मिपारतन्त्र्येण धर्म्मितावच्छेदके प्रकारभानस्य सकलसम्प्रदायानुमतस्यापलापापत्तेः । न च तादृशसम्बध्यताप्रतियोगिकस्वरूपसम्बन्धेनेति यदुक्तं तदसङ्गतं तत्तत्प्रतियोगिकत्वादिस्वरूपविशेषरूपेण संसर्गताया अप्रामाणिकत्वादित्वादिति वाच्यम्, उपलक्षणविधया किञ्चित्प्रकारेण धर्म्मिप्रकारकज्ञानतो विशेषणविधया तादृशकिञ्चित्प्रकारेण धर्म्मिप्रकारेण विशिष्टवैशिष्ट्यबुद्धेर्वैलक्षण्यनिर्वाहाय विशिष्टप्रतियोगिकत्वेन विशेषरूपेणापि संसर्गतायाः सर्वसम्मतत्वात् । सूपकारमानयेत्यादौ कर्म्मत्वांशे प्रकारीभवत्सूपकारे सूपकृतेरुपलक्षणविधया भानमेव । "अरुणया गवा सोमं क्रीणाती"त्यादिश्रुतौ "अपुत्रेणैव कर्त्तव्यः पुत्रः प्रतिनिधिः सदे"त्याद्यार्षे च करणत्वकर्त्तृत्वांशे प्रकारीभूतयोर्गवापुत्रयोः आरुण्यस्य पुत्रविरहस्य च वैशिष्ट्यविधया भानमेवाङ्गीकर्त्तव्यं तद्भानद्वैविध्यानुप-

गमे दोषश्चिन्तनीयः ।

अत एव महामहोपाध्यायमथुरानाथेन व्याप्तिवादे वृत्तित्वीयस्वरूपसम्बन्धेन साध्याभाववद्वृत्तित्वस्य सामान्याभाव उक्तः । एतेन साध्याभाववदवृत्तिरेव व्याप्तिरनुमित्यौपायिकीति दीधितिकारमतमप्यनादेयं केवलान्वयितावच्छेदकावच्छिन्नविधेयताकत्वेनानुव्यवसीयमानाया अनुमितेरपलापापत्तेः । इष्टापत्तौ अनुव्यवसायमात्रसाक्षिका निखिलानुमितिरेव तत्करणे प्रमाणान्तरत्वञ्चोच्छिद्येत । व्यतिरेकिविधेयकत्वेनैवानुमितेरनुव्यवसायसाक्षिकतया तादृशानुमितेरेव नालीकता । परन्तु केवलान्वयिविधेयकानुमितेरेव तस्या अननुव्यवसीयमानत्वात् । इति तु शपथवचोमात्रागम्यत्वादश्रद्धेयमेव ।

यत्तु स्वावच्छिन्नसामानाधिकरण्यव्यापकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यकहेतुतावच्छेदकवत्त्वं व्याप्तिस्तदप्यनादृतम्, तस्या हेतुतावच्छेदकभेदेनानन्तत्वात् गुरुशरीरत्वाच्च ।

वस्तुतस्तु मीमांसकमते वाच्यवाचकभाववत् दीधितिकारमते कार्य्यकारणभाववत् सर्वमत एवाधाराधेयनिरूप्यनिरूपकभावावच्छेद्यावच्छेदकभावादिवत् व्याप्यव्यापकभावोऽपि स्वरूपसम्बन्धविशेष एव । अतो न दुर्ज्ञेयत्वाद्यवकाशः । प्रत्यक्षसामान्ये गुरुत्वगुणवत् दाहे मणिवत् व्यभिचारादिज्ञाने तर्कवत् व्याप्तिज्ञाने विरोध्यविषयकस्यापि व्यभिचारादिनिश्चयस्य प्रतिबन्धकत्वमास्थेयम् । अत एव तार्किकभिन्नपुंसां पशुपतत्रिपतङ्गप्रभृतीनाञ्च स्वस्वप्रयोजनार्थं नानुमानस्यासौलभ्यम् । अन्यथाऽगाधनीरधितरङ्गापेक्षया दुरवगाहप्रोक्तव्याप्त्यवगाहिग्रहस्य तार्किकपुरुष एव दुर्लभतया क्व पुनस्तदन्यपुरुषे तद्वार्त्तापि नितरामेव पशुप्रभृतिषु ।

इति नव्यनैयायिकमतं समाप्तम् ।



एताः सुवृत्तिबहुशक्तिसदर्थयुक्ताः
सद्भारतीः सरलभाववतीः प्रतीत्य ।
संसेव्य सत्पथगतं पदमेतदीयं
दुष्प्रापमर्थमखिलं सुधियो लभन्ताम् ।। २६ ।।

शाके पुष्पशरेषुपुष्करवसुश्वेतांशुमाने शुचौ
ग्रन्थो मेऽचलयुक्तिकाज्जलधितश्चिन्तामयादुत्थितः ।
पीयूषोपमताऽस्य वा गरलता स्यादेतदास्वादनं
साधोः सम्भविताऽऽशुतोषसुमनोभावेन सम्भाव्यते ।।२७।।

[ इति श्रीमहामहोपाध्यायराखालदासन्यायरत्नकृतः ]
समाप्तस्तत्त्वसारनामकग्रन्थोऽयम् ।



# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS :

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiranāvali Bhāskara, a Commentary on Udayana's Kiranavali, Dravya, section, by Padmanābha Misra.
Ed. with Introdnction and Index by Gopinath Kâviraj, M. A. Rs. 1-12

No. 2—The Advaita Chintāmani, by Rangoji Bhatta,
Ed. with Introduction etc. by Narayana Sastri Khiste Sāhityāchārya. Rs. 1-12

No. 3—The Vedānta Kalpalatikā, by Madhusudana Sarasvati.
Edited with Introduction etc. by Rāmājnā Pāndeya Vyākaranāchārya. Rs. 1-12

No. 4—The Kusumānjali Bodhani, a Commentary on Udayana's Theistic Tract, Nyāya Kusumānjali, by Varadarāja.
Ed. with Introduction etc. by Gopinath Kaviraj M. A. Rs. 2-0

No. 5—The Rasasāra, a Commentray on Udayāna's Kiranavali, Guna Section, by Bhatta Vādindra.
Ed.with Introduction etc. by Gopinath Kaviraj, M. A. Rs. 1-2

No. 6—(Part I)—The Bhāvanā Viveka by Mandan Misra, with a Commentary by Bhatta Umbeka,
Ed.with Introduction etc. by M.M. Ganganatha Jhā, M. A., D. Litt. Rs. 0-.12

No. 6-(Part II)—Ditto Ditto Rs. 0-12

No. 7-(Part I)—The Yoginihrdaya dipika, by Amrtānanda Natha, being a Commentary on Yoginihrdaya, a part of Vāmakesvara Tantra.
Ed. with Introduction etc. by Gopinath Kavirāj, M. A. Rs. 1—8

No. 7-( Part II ) Ditto Ditto Rs. 1-4

No. -8-The Kāvyadakini, by Gangahanda Kavindra.
Ed. with Introduction etc. by Jagnnātha Sāstri Hoshing Sāhityopādhyāya .. Rs. 0-10

No. 9—(Part I)-The Bhakti Chandrikā, a Commentary on Sandilya's Bhaktisutras, by Nārāyana Tirtha. Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 0-15

No. 10-(Part I)-The Siddhāntaratna, by Baladeva Vidyābhusana. Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 1-2

No. 10-( Part II)—Do. Do. Rs. 2-12

No. 11-The Sri Vidya Ratna Sutras, by Gaudapada, with a Commentary by Sankararanya.
Ed. with Introduction etc. by Narayana Sastri Khiste Sahityacharya. Rs. 0-9

No. 12-The Rasapradipa, by Prabhakara Bhatta,
Ed. with Introduction etc. by Narayana Sastri Khiste Sahityāchārya. Rs. 1-2

No. 13-The Siddhasiddhānta Sangraha, by Balabhadra.
Ed, with Introduction by Gopinath Kaviraj, M.A. Rs. 0-14

No. 14-The The Trivenikā, by Asādhara Bhatta.
Ed. with Introduction by Batukanātha Sarmā Sāhityopādhyāya. M.A. and Jagannātha Sastri Hoshing Sahityopadhyāya. Rs. 0-14

No. 15-(Part I)-The Tripurārahasya. ( Jnāna Khanda )
Ed. with a Prefatory Note by Gopinath Kaviraj. M. A. Rs. 0-14

No. 15-( Part-II )-Do. Do. Rs. 2-4

No. 15-(Part-III)-Do. Do. Rs. 2-0

No. 16-The Kāvya Vilāsa, by Chiranjiva Bhattāoharya.
Ed. with Introduction etc. by Batukanātha Sarmā Sāhityopādhyāya, M. A. and Jagannātha Sastri Hosing Sāhityopādhyāya. Rs. 1-2

No. 17-The Nyāya Kalikā, by Bhatta Jayanta.
Ed. with Introduction by M. M. Gangānātha Jhā, M. A. D. Litt. Rs. 0-14

No. 18–( Part I )–The Goraksa Siddhānta Sangraha.
Ed. with a Prefatory Note by Gopinath Kaviraj, M. A. Rs. 0–14

No. 19–( Part. I )–The Prākrita Prakāsa by Vararuchi with the Prākrita Sanjīvanī by Vasantarāja and the Subodhinī by Sadānanda.
Ed. with Prefatory note etc. by Batuk Nath Sarma, M. A. and Baladeva Upadhyāya, M.A. Rs. 2–4

No. 19–(Part. II ) Ditto Ditto Rs. 2–12

No. 19–( Part III ) Introduction etc. ( In Preparation. )

No. 20–The Mānsatattvaviveka by Visvanātha Nyāyapanchanana Bhattācharya,
Edited with Introduction etc. by P. Jagannātha Sastri Hoshing Sāhityopādhyāya, with a Foreword by Pandit Gopi Nath Kavirāja, M.A., Principal, Government Sanskrit College, Benares. Rs. 0–12

No. 21–( Part I ) The Nyāya Siddhānta Mālā by Jayarāma Nyāya Panchānana Bhattāchārya,
Edited with Introduction etc.by Mangal Deva Sāstrī M.A., D. Phil. (Oxon), Librarian, Govt. Sanskrit Library,Sarasvati Bhavana, Benares. Rs. 1–2

No. 21–( Part–II ) Ditto Ditto Rs. 2–0

No. 22–The Dharmānubandhī Slokachaturdasi by Sri Sesa Krsna with a Commentary by Rāma Pandit.
Edited with Introduction etc. by Nārāyana Sāstri Khiste Sāhityāchārya, Assistant Librarian, Government Sanskrit Library, Sarawati Bhavana, Benares.

No. 23–Navarātrapradīpa by Nanda Pandit Dharmādhikārī.
Ed.with Introduction etc.by Vaijanātha Sāstrī Varakale, Dharmasāstra–Sāstrī, Sādholāl Research Scholar, Sanskrit College, Benares, with a Foreword by P. Gopinath Kaviraj, M. A., Principal, Government Sanskrit College, Benares.

No. 24–The Srī Rāmatāpinīyopanisad with the Commentary called Rāma Kāsikā in Purvatāpinī and Anandanidhi in Uttaratāpinī by Anandavana.
Ed. with Introducton etc. by Anāntarāma Sāstrī Vetāla Sāhītyopādhyāya, Post-Achārya Scholar, Govt Sanskrit College, Benares, with a Foreword by Pandit Gopī Nātha Kavirāja, M. A., Principal, Government Sanskrit College, Benares. Rs. 3–12

No. 25–The Sāpindyakalpalatikā by Sadāsivadeva alias Apadeva with a commentary by Nārāyna Deva.
Edited with Introduction etc. by Jagannātha Sāstri Hosinga, Sāhityopādhyāya, Sādholāl Research Scholar, Gevt. Sanskrit College, Benares. Rs, 1–4

No. 26–The Mrgānkalekhā Nātikā by Visvanatha Deve Krvi.
Edited with Introduction etc. by Nārāyana Sāstri Khiste Sāhityācharya, asst. Librarian, Government Sanskrit Library, Benares. Rs. 1–0

No. 27–The Vidvachcharita Panchakam By Nārāyana Sāstri Khiste, Sāhityacharya. Assistant Librarian, Govt. Sanskrit Callege, Library, Sarasvati Bhavana, Benares. with an Introduction by Gopināth Koviraja, M.A., Principal. Govt. Sanskrit Callege, Benares. Rs. 2–0

No. 28–The Vrata Kosa by Jagannātha Sāstri Hosingā Sāhityopādhyāya, late Sadholal Research Scholar, Sanskrit College, Benares. with a Foreword by Srī Gopinātha Kaviraja, M.A., Principal, Govt. Sanskrit College, Benares. Rs. 4–0

No. 29–The Vritti dipikā by Mauni Srī Krsna Bhatta.
Edited with Introduction etc. by Pt. Gangadhara Sastri Bharadvaja Professor. Govr. Sanskrit College Benares.

No. 30–The Padārtha Mandanam By Srī Venīdatta
Edited with Introduction etc, by Pandit Gopāla Sāstri Nene, Professor, Govt. Sanskrit College, Benares.

No. 31–(Part I )–The Tantraratna by Partha Sarathi Misra.
Edited by M.M. Dr.Ganganatha Jha, M.A., D. Litt, Vice-Chancellor, Allahabad University, Allahabad.

No. 32–Tattvasāra by Rakhaldas Nyayaratna. Edited with Introduction etc by P. Harihara Sāstri, Professor, Benares Hindu University, Benares.

No. 33–The Nyāya Kaustubha (Pratyaksa), by Mahādeva Punatamkar. Edited with Introduction, etc by P. Umesh Miśra, M. A., Allahabad University, Allahabad.

No. 34–The Advaita vidyatilaka ( Part I ), by Samara Puṅgava Dīksita, with Darpana by Dharmayya Dīksita. Edited by P. Ganapati lal Jha, M. A., Sadholal Scholar, Government Sanskrit Library, Benares.

No. 35–The Dharma Vijaya Natata by Bhudeva Sukla. Edited with Introduction by P. Nārāyana Sāstrī Khiste, Government Sanskrit Library, Benares.



# THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES:

Edited by

GOPINATH KAVIRAJ, M. A.

Vol. I—

(a) Studies in Hindu Law (1); its Evolution, by Gaṅgā-natha Jha.

(b) The view-point of Nyāya Vaiśesika Philosophy, by Gopināth Kaviraj,

(c) Nirmana Kaya, by Gopinath Kaviraj Rs, 1-15

Vol. II—

(a) Parasurāma Miśra alias Vani Rasala Raya, by Gopinath Kavirāj.

(b) Index to Sabara's Bhasya, by the late Col. G.A. Jacob.

(c) Studīes in Hindu Law(2): its sources, by Gangānath Jha

(d) A New Bhakti Sutra, by Gopinath Kaviraj.

(e) The System of Chakras according to Goraksa natha, by Gopinath Kaviraj.

(f) Theism in Ancient India, by Gopinath Kaviraj.

(g) Hindu Poetics, by Batuka natha Sarma.

(h) A Seventeenth Century Astrolabe by, Padmakara Dvivedi.

(i) Some aspects of Vira Saiva Philosophy by, Gopināth Kaviraj.

(j) Nyaya Kusumanjali ( English Translation ), by Gopinath Kaviraj.

(k) The Definition of Poetry, by Narayana Sastri Khiste

(1) Sondala Upadhyaya, by Gopinath Kaviraj. Rs. 5

Vol. III—

(a) Index to Sabara's Bhasya, by the late Col. G.A. Jacob.

(b) Studies in Hindu Law ( 3 ) Judicial Procedure: by Ganganatha Jha.

(c) Theism in Ancient India by Gopinath Kaviraj.

(d) History and Bibliography of Nyāya Vaisesika Literature, by Gopinath Kaviraj.

(e) Naisadha and Srī Harsa by Nīlakamala Bhattāchārya.

(f) Indian Dramaturgy, P. N. Patankar Rs. 5

Vol. IV—

(a) Studies in Hindu Law [4]: Judicial Procedure: by Ganganatha Jha.

(b) History and Bibliography of Nyaya Vaiśesika Literature, by Gopinath Kaviraj.

(c) Analysis of the Contents of the Rgveda--Pratisakhya, by Mangala Deva Sastri.

(d) Nārāyana's Ganitakaumudi, by Padmakara Dvivedi,

(e) Food and Drink in the Ramayanic Age, by Manmathanatha Roy

(f) Satkāryavāda: Causality in Sāṅkhya, by Gopinath Kaviraj.

(g) Discipline by Consequences, by G.L. Sinha.

(h) History of the origin and expansion of the Aryans, by A. C. Ganguly.

(i) punishments in Ancient Indian Schools, by G. L. Sinha. Rs. 5

Vol. V—

(a) Anciant Home of the Aryans and their migration to India, by A. C. Ganguly.

(b) A Satrap Coin, by Shyamalal Mehr.

(c) An Estimate of the Civilisation of the Vanaras as depicted in the Ramayana, by Manmatha natha Roy.

(d) A Comparison of the Contents of the Rgveda, Vājasaneya, Tait tiriya and Atharvaveda Prātiśākhyas, by Mangala Deva Sastri.

(e) Formal Tra ning and the Ancient Indian Thought, by G. L. Sinha.

(f) History and Bibliography of Nyāya Vais'esika Literature, by Gopinath Kaviraj.

(g) A Descriptive Index to the names in the Rāmāyana, by Manmatha nāth Roy

(h) Notes and Queries (1) Virgin worship, by Gopinath Kavirāj.

Rs. 5

Vol. VI—

(a) Index to Sabara's Bhasya, by the late Col. G. A. Jacob

(b) Some Aspects of the History and Doctrines of the Nathas, by Gopinath Kaviraj.

(c) Studies in Hindu Law (5) Evidence, by Ganganatha Jhā

(d) An Index etc to the Rāmāyana, by Manmatha natha Roy.

(e) Studies in Hindu Law, by M. M. Ganganatha Jha.

(f) The Mimansa Manuscripts in the Govt. Sanskrit Library (Benares), by Gopinath Kaviraj.

(g) Notes and Queries, by Gopinath Kaviraj.

Vol VII

(a) Bhāmaha and his Kāvyālaṅkāra, by Batuka ntāha Sarma and Baladeva Upadhyaya.

(b) Some variants in the readings of the Vaiśesika Sutras, by Gopinath Kavīraj.

(c) History and Bibliography of Nyāya Vaiśesika Literature, by Gopinath Kaviraj.

(d) An attempt to arrive at the correct meaning of some obscure Vedic words, by Sitaram Joshi.

(e) A comparison of the contents of the Rig Veda, Vājasaneya, Taittirīya and Atharva Veda (Chāturadhyāyikā) Prātiśākhyas, by Mangaldeva Sāstrī.

(f) An Index to the Rāmāyana. by Manmatha nath Roy.

(g) An Index to Sabara's Bhaṣya, by the late Col J.A.Jacob

(h) The date of Madhusudan Sarasvati, by Gopinath Kaviraj.

(i) Descriptive Notes on Sanskrit Manuscripts, by Gopinath Kaviraj.

(j) A note on the meaning of the term Parārdha, by Umeśa Miśra.

Vol VIII (in Progress)

To be had of

The Superintendent Government Press, U. P.

Allahabad.